श्रीमहाभारतसार:
द्वितीय खण्ड:

# प्रस्तावना

( ले. बाळशास्त्री हरदास साहित्याचार्य, नागपूर )

पाश्चात्यशिक्षणपद्धत्या पाश्चात्यतत्त्वपरिशीलनशालिनामस्मदीयानामेव भारतवर्षस्य प्राणभूतायां संस्कृतौ धर्मे च या घृणादृष्टिः प्रादुर्भूता, तया प्राचीनदेशाचारा धर्माचाराश्च समूलमुन्मूलयितुं प्रवृत्तिर्दिवानिशं परिदृश्यते। परैरुद्भावितानां युक्त्याभासानामालम्बेन सर्वत्र धर्मे संस्कृतौ चाविश्वासः समजनि। राष्ट्रभक्ताः अपि अर्थकामप्रधानयुक्तिभिर्भ्रमक्षिप्ताः राष्ट्रप्राणभूतायां संस्कृतौ संदिहानाः किंकर्तव्यतामूढाः परिदृश्यन्ते। तस्याः घृणायाः तादृशस्य च अविश्वासस्य निरासः संस्कृतेर्धर्मस्य च ज्ञानमन्तरा न शक्यताकोटिमापद्येत। तच्च ज्ञानं भारतीयसमाजस्य भारतीयत्वेनाभ्युदयार्थं नितरामावश्यकम्। इदानींतनी परिस्थितिस्तु अस्मदभिप्रेतस्य भारतीयत्वस्य सर्वथा प्रतिकूला। राष्ट्रधर्मस्य च सर्वतः विप्लवो दृश्यते। स्वातन्त्र्यं, सुधारणा, समता इत्यादि-प्रलोभनैः जनतायाः विधीयमानो बुद्धिभ्रंशः इदमेव दृढयति यत्सर्वथा अर्थ एव परमपुरुषार्थः धनमानप्रतिष्ठादिकमेव च जीवितप्रयोजनमिति। ईदृश्याम-वस्थायां राष्ट्रस्य दृश्यमानः नैतिकोऽधःपातः स्वाभाविक एव।

किञ्च नाम तद्भारतीयत्वं यत्संरक्षणपूर्वकः राष्ट्राभ्युदयः भवदभिप्रेतः, भारतदेशवासित्वं भारताभिजनत्वं वा, तच्च सर्वेषामेव सम्मतमिति चेदत्र ब्रूमः न केवलं भारतदेशवासित्वं भारताभिजनत्वं वा भारतीयत्वं किन्तु भारताभिजनत्वे सति विशिष्टसंस्कृतिमत्वमेव भारतीयत्वम्। यया भारतीयः सन्तुष्यति च यया च क्रोधवशमायाति, ययाऽऽनन्दकाष्ठामागच्छति यया च दुःखमनुभवति, यया मित्रभावमुपगच्छति यया च शत्रुभावमापद्यते, यया निर्विद्यते यया च संमन्यते, यया माद्यति यया च सुखास्पदत्वेन दुःखास्पदत्वेन वा जीवनमापनं करोति सा सर्वाऽपि भावनाततिः श्रद्धाततिर्वा संस्कृतिपदवाच्या भवितुमर्हति। तया च इतरपरिच्छेदेन यद्वैशिष्ट्यं भारतीयेषु परिदृश्यते तदेव हि भारतीयत्वम्।

एतादृशस्य भारतीयत्वस्य तस्य च प्राणभूतायाः भारतीयसंस्कृतेः स्वरूप-परिज्ञानार्थं वेदवेदाङ्गस्मृतिपुराणेतिहासादिग्रन्थानां सम्यगध्यनमावश्यकम्। समयाभावादनधिकारित्वाच्च सर्वेषामेव कृते एतादृशाध्ययनं शक्यताकोटिं नेयादिति चेत् यस्य एकस्यैव ग्रन्थस्य अध्ययनेन भारतीयसंस्कृतेः भारतीय-त्वस्य च सम्यक् संपूर्णं च स्वरूपपरिज्ञानं भवितुं शक्यं तस्य अध्ययनं अवश्यं कर्तव्यम्। स च ग्रन्थः भगवान् श्रीकृष्णद्वैपायनप्रणीतः महाभारताख्य इतिहासः। भगवता श्रीकृष्णद्वैपायनेन हि अमुमेवोद्देशमुररीकृत्य अस्य ग्रन्थस्य रचना कृता। तदुक्तम्—

> स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा।
> इति भारतमाख्यानं मुनिनाकृपया कृतम्॥ इति।

अयं हि महाभारताख्य इतिहासग्रन्थः प्राचीनपद्धत्या लिखितो ज्ञानकोशः एव। त्रैवर्णिकानाम् आन्हिकक्रियायां स्वाध्यायत्वेन ब्रह्मयज्ञे महाभारतस्य निर्देशो भवति। "भारतः पञ्चमो वेदः" इति वचनं तु प्रसिद्धमेव। स्वीये History of Indian Literature नामके ग्रन्थे डॉ. विंटरनिट्झ (Winternitz) महोदयेन महाभारतवर्णनसमये उक्तम् "It is only in a very restricted sense that we may speak of the Mahabharata as an 'Epic' and a 'Poem'. Indeed in a certain sense, the Mahabharat is not one poetic production at all, but rather a whole literature."

महाभारते केवलं कुरुपाण्डवयुद्धेतिहासः समुपवर्णित इति यदुच्यते तत्तु न सत्यम्। कुरुपाण्डवयुद्धेतिहासकथनमिषात् भगवता कृष्णद्वैपायनेन अयं ज्ञानकोश एव विरचितः। अत एव च भारतटीकाकृता नीलकण्ठेन उक्तम्— "इह खलु भगवान् पाराशर्यः परमकारुणिको मन्त्रमध्यममतीननुगृहीतुं चतुर्दशविद्यास्थानरहस्यान्येकत्र प्रदर्शयिषुर्महाभारताख्यमितिहासं प्रणेष्य-न्प्रारिप्सितस्य ग्रन्थस्य निष्प्रत्यूहपरिपूरणाय प्रचयगमनाय च कृतं मङ्गलं शिष्यशिक्षायै श्लोकरूपेण निबन्धन्नर्थात्तत्र प्रेक्षावत्प्रवृत्त्यंगमभिधेयादि दर्शयति"। भगवता कृष्णद्वैपायनेन महाभारतमिषेण किं किमुक्तम् इत्यस्य वर्णनं महाभारते एव निम्नप्रकारेण कृतमस्ति—

तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः ।
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ १८ ॥

इदं तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम् ।
विस्तरैश्च समासैश्च धार्यते यद्द्विजातिभिः ॥ २७ ॥

अलङ्कृतं शुभैः शब्दैः समयैर्दिव्यमानुषैः ।
छन्दोवृत्तैश्च विविधैरन्वितं विदुषां प्रियम् ॥ २८ ॥

धर्मार्थकाममोक्षार्थैः समासव्यासकीर्तनैः ।
तथा भारतसूर्येण नृणां विनिहतं तमः ॥ ८५ ॥

पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाः प्रकाशिताः ।
नृबुद्धिकैरवाणां च कृतमेतत् प्रकाशनम् ॥ ८६ ॥

इतिहासप्रदीपेन मोहावरणघातिना ।
लोकगर्भगृहं कृत्स्नं यथावत्सम्प्रकाशितम् ॥ ८७ ॥

सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ।
पर्जन्य इव भूतानामक्षयो भारतद्रुमः ॥ ९२ ॥

( श्रीमहाभारते आदिपर्वणि प्रथमोऽध्यायः )

यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विजः ।
न चाख्यानमिदं विद्यान्नैव सस्याद्विचक्षणः ॥ ३८२ ॥

अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत् ।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥ ३८३ ॥

श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते ।
पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव ॥ ३८४ ॥

इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः ।
पञ्चभ्य इव भूतेभ्यो लोकसंविधयस्त्रयः ॥ ३८५ ॥

काव्यदृष्ट्या अपि अस्य ग्रन्थस्य अलौकिकयोग्यताविषये तदाधारेणैव लिखिताः कविकुलगुरुकालिदासभारविमाघश्रीहर्षश्रीज्ञानराजप्रभृतीनां कृतयः एव प्रमाणम् । "नाना नवरससुधाब्धि" रिति यत् महाभारतविषये

श्रीज्ञानदेवेन उक्तं तत्तु युक्ततरमेव। महाभारतकृता शृंगारवीरकरुणादिकाव्यरसानामाविष्कृतिरेव न कृता अपि तु एकैकस्य रसस्य एकैको ह्रद एव निर्मितः। अशबलितस्वरूपेण रसस्य इयान् विशुद्धतम आविष्कारः कुत्रापि न दृश्यते। उपाख्यानमिषेण महाभारतकृता यः रममणीयतायाः अविष्कारः कृतः तेन पाश्चात्यरसिकाः अपि मुग्धाः। १८१९ खिस्ताब्दे फ्रान्झ बॉप (Franz Bopp) इत्यनेन महाभारतान्तर्गतनलोपाख्यानस्य अनुवादः कृतः। जिब्रान्टिस इत्यनेन च तदुपरि नाटकं विलिख्य फ्रॉन्सदेशे तस्य प्रयोगः कृतः। तदुपरि श्लेगेल (A. W. V. Schlegel) महाशयेन लिखितमस्ति "I will only say, that in my estimation, this poem can hardly be surpassed in pathos and ethos in the enthralling force and the tenderness of the sentiments. It is made expressly to attract old and young, the high-born and the lowly, the commisseurs and those who are merely guided by instincts."

श्रीमन्महाभारतान्तर्गतसाविश्युपारव्यानविषये डॉ. विंटरनिट्झमहोदयः वदति—

"But whoever it was who sang the song of Savitri, whether Suta or a Brahman, he was certainly one of the greatest poets of all times. Only a great poet was capable of placing this noble female character before us so that we seem to see her before our eyes. Only a true poet could have described in such a touching and elevating manner, a victory of love and constancy of virtue as wisdom over destiny and death, without even for an instant, falling into the tone of the dry preacher of morality; and only an inspired artist could have produced, as if by magic, such wonderful pictures before us. The poem has frequently been translated into European languages including German, but all translations can only give a feeble idea of the incomparable charm of this Indian Poem."

नीतिशास्त्रदृष्ट्या कर्मयोगशास्त्रदृष्ट्या च अयं महाभारतो ग्रन्थः सर्वेषां मानवानां कृते पथप्रदर्शकरूपेण अवतिष्ठते। पिण्डब्रह्माण्डज्ञानपूर्वक-मात्मविद्यायाः गूढानि पवित्राणि च तत्त्वानि असन्दिग्धतया निरूप्य तेषा-माधारेण मनुष्यं प्रति परमपुरुषार्थस्य परिचायकः तत्समवेतमेव च भक्ते-र्ज्ञानेन तयोर्द्वयोरपि च शास्त्रतः प्राप्तेन व्यवहारेण साकं सोपपत्तिकं कमनीयं च समन्वयं कुर्वन् संसारे विभ्रमितचित्तशान्तिसाधकः विशेषतश्च निष्काम-कर्तव्याचरणप्रेरकः एतादृशोऽपरः ग्रन्थः जगति वाङ्मयान्तरेष्वपि दुर्लभ एव।

ईदृशेन एतेन मोहावरणघातिना इतिहासप्रदीपेन सर्वैरपि स्वस्वकर्तव्य-मार्गः सुपरिचितः कर्तव्यः इति यद्यपि स्पष्टं तथापि समयाभावात् सामर्थ्याद्यभावाच्च लक्षश्लोकसङ्ख्यापरिमितस्य अस्य ग्रन्थस्य सम्यक् वाचनम् अपि कर्तुं जनाः नोत्सहन्ते; मननचिन्तनादिकं तु दूरे एव। अतः लोकहितार्थं परमकारुणिकेन पुसदनगरस्थेन श्री शंकरराव सरनाईक महोदयेन '**श्रीमहाभारतसार**'मिषेण श्रीमन्महाभारतस्य सङ्क्षेपनिर्माणे प्रयत्नः प्रारब्धः। तस्य प्राथमिकपर्वपञ्चकसङ्क्षेपात्मकः प्रथमो भागः पूर्वमेव प्रकाशितः वर्तते। अयं हि भीष्मद्रोणकर्णशल्यसौप्तिकस्त्री, इत्यादिपर्वषट्क सङ्क्षेपात्मकः द्वितीयो भागः साम्प्रतं प्रकाश्यते।

अस्मिन् हि महाभारतसारे कुत्रापि नीतितत्त्वज्ञानविषयकप्रकरणानां सङ्क्षेपो नैव कृतः इति भीष्मपर्वान्तर्गतश्रीमद्भगवद्गीतातोऽवगम्यते। अतः अनेन **श्रीमहाभारतसारेण** श्रीमहाभारतपठनेन चिन्तनेन च यो लाभः सैव भविष्यतीति मन्ये। श्रीमद्भिः सरनाइकमहोदयैः सम्पादकमण्डलेन च महाभारतसागरमन्थनं कृत्वा अयं **सारसुधाकुम्भः** वाचकानां हस्ते दत्वा महान् लोकोपकारः कृतः। विद्यालयादिद्वारा अधीतिबोधाचरणप्रचाराणां सुलभत्वात् विद्यापीठेषु अस्य ग्रन्थस्य पाठ्यपुस्तकत्वेन अवश्यं समावेशः कर्तव्यः। समयवैशिष्ट्यं सम्यगधिगम्य '**श्रीमहाभारतसार**'ग्रन्थनिर्माणेन लोकहितार्थं यैःप्रयतितं तान् श्रीमहाभारतग्रन्थस्य नायकः **श्रीरुक्मिणीजानिः** वारंवारं एवमेव लोकहितार्थं प्रेरयतु इत्याशासे—

सर्कल ७, महाल<br>श्रीदक्षिणामूर्तिमन्दिरम्<br>**नागपूरम्**

विदुषामनुचरः<br>**हरदासोपाव्ह बालशास्त्री**<br>साहित्याचार्यः

# FOREWORD

One of the greatest treasures that India can well be proud of is the very rich and varied literature in Sanskrit, dating from not less than three thousand years. Here I am not referring to Vedas and Upanishads which even now hold the attention of scholars and thinkers, both as the earliest human probe into mysteries of human mind and consciousness and as examples of inspired noble poetry. I am concerned here only with 'Mahabharat', and the 'Mahabharatsar'. The latter is being published as a compendium in three volumes, of the original great Epic.

Whether rich or poor, young or old, every one of us is fond of story. All prophets and great poets have been fully aware of this weakness of the human mind for stories. Therefore, they have utilized this medium for conveying in the simplest form the noblest truths of religion, philosophy, and ethics. The story form has one more advantage: it gives shape and form to abstract ideas and makes them live and move in life. A truth that is abstract is often very dull to listen to, difficult to understand, and too vague to act upon. The same truth when clothed in a suitable story, becomes not only intelligible and attractive but deeply impresses us. We identify ourselves with heroes of the story we might be reading and thus, in a way, rehearse actions which we could very much like to repeat in our own lives.

The great author of 'Mahabharat' Vyas has made no secret of his intentions. He has clearly said that this is the fifth Veda. It does not seek to add anything new, but it seeks to make every truth in Vedas explicit and

concrete, so that it may be understood even by the most uneducated and unsophisticated mind. In fact, what interests the reader of the 'Mahabharat' is not the religion or the philosophy or the ethics that is sought to be taught, but the heroic story, the intriguing situations, the rich and complicated characters, and the mighty figures that seem to fill the whole canvas with their thoughts and deeds. Religion and other things are a by-product, as it were, in the form of cream when curds are churned. From the turmoil of tumultuous life and riotous play of emotions arises the outline of an ideal way of life.

In fact, what is philosophy worth, if it does not give us the underlying basic principles of life, and in its own turn does not guide us in our varied activities? Abstract philosophy is practically nobody's concern, except of a few who might be indulging in play with ideas or as intellectual luxury or sporting with logic-chopping. Every one of us is, in fact, busy with life, or rather life keeps us busy, because life is action. And it is the philosophy of action that we all want and are in earnest search of. It is such a philosophy of action that 'Mahabharat' unfolds through one of the most variegated life-stories of the Princes of the House of Kurus and the Pandavas.

The original 'Mahabharat' runs into a lac of Slokas. Scholars say that it was Vyas who was the compiler of this mightiest of books. He collected, collated and edited the floating pieces of epic poetry that were scattered throughout India, and incorporated them into a single cogent story of the heroic life of the period. It is said that the basis of 'Mahabharat' was but a small story which was called by the name of 'Jai'. The first

Sloka of that story is supposed to have been the following :—

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥

However, while we can take great pride for this voluminous national epic of ours, it is very difficult for most of us either to have it in our own libraries or to go through the whole of it in our life-time. There is no doubt that in addition to being a great story and an epic, it is a store-house of good poetry, concentrated wisdom, and full of pithy sayings relevant for all occasions. Though the original 'Mahabharat' is all this, it is too bulky and too difficult to be used even as a reference book.

There are in existence at present some summaries and compendiums of the original 'Mahabharat'. Some of them are selections, some claim to give the bare main story, others have attempted subjectwise selections, and so on. But none of them fulfils the need which 'Mahabharatsar' may well claim to fulfil.

'Mahabharat' has been boiled down to about twelve thousand Slokas in the 'Mahabharatsar'. That means it is about one-eighth of the original size. The merit of this book consists in its inclusion of all important Upakhyanas or subsidiary stories which appear in 'Mahabharat'. The second merit is that it is issued in three handy volumes instead of one. Some of the best Sanskrit scholars have exercised their minds while preparing this compendium. It is easy to refer to, as well as read continuously, as the interest of the narrative is kept up from the beginning to the end. The type used is quite bold and thick and the get-up of the book

is good enough for the very moderate price that the publishers have fixed.

It seems that these three volumes would very easily serve the purpose of all school and college libraries, as well as libraries in towns and big villages. Even for individuals, it would not be a very heavy burden, if one is really a lover of books and of our traditional culture.

It goes without saying that very few people take up such attempts, and I must congratulate the authors on carrying out this project fully and completely in spite of difficulties they must have had. It may be necessary that Education Departments and various State Governments and also the Central Government may have to take note of this great attempt, which has brought home to everyone the importance of 'Mahabharat' and has brought the book within the buying capacity of those who desire to possess a copy.

I hope that this attempt would be suitably encouraged by lovers of learning and of culture.

Ranchi }
21-7-56 }

R. R. DIWAKAR.

॥ श्री ॥

# ॥ सम्पादकमण्डलस्य हृद्गतम् ॥

ज्ञानाञ्जनेन लोकस्य दृष्टिदोषनिवारणम् ।
वन्द्यवन्द्यतमं शान्तं व्यासं वन्दामहे वयम् ॥

(१) अस्य **श्रीमहाभारतसारस्य** प्रथमखण्डप्रसिद्ध्यनन्तरं बहूनां विपश्चिदपश्चिमानामनुकूलाभिप्रायप्रदर्शनेन सफलतां गता अस्मच्छ्रमा इति मन्यामहे ।

(२) प्रथमखण्डस्य प्रस्तावनालेखकानां श्री. ज. स. करंदीकर महाशयानामितरेषां च कतिपयसज्जनानां सूचनानुसारेण द्वितीय-तृतीय खण्डयोरुपकथा यथास्थानं सङ्गृहीताः सन्ति । प्रथमखण्डवत् तत्तत्पर्वान्ते न सन्निविष्टाः ।

(३) केचन सज्जनाः प्रश्नमिममुद्भावयन्ति, यद्भारताचार्य वैद्यमहाशयसम्पादितस्य सङ्क्षिप्तभारतस्य विद्यमानत्वे सति किम्प्रयोजनोऽयं **सारग्रन्थसम्पादनसमारम्भ** इति । येषामन्तःकरणे समुद्भवेदयं प्रश्नस्तैरस्य प्रश्नस्योत्तरलाभार्थमधोलिखितानि **सारग्रन्थस्य** वैशिष्ट्यान्यवश्यमवलोकनीयानि ।

(अ) सङ्क्षिप्तभारतस्य श्लोकसङ्ख्या सार्धसप्तसहस्रपरिमिता (७५००) आसीत् । अस्य **सारग्रन्थस्य** तु तद्द्विगुणाधिका षोडशसहस्रसम्मिता (१६०००) वर्तते । तेन हेतुना भूयान्परिचयो भवितुं शक्यते महाभारतस्य ।

(आ) सङ्क्षिप्तभारते श्रीमद्भगवद्गीता केवलं पादटिप्पण्यां नामोल्लेखेन चकास्ति । महती त्रुटिरेव सा सङ्क्षिप्तभारतग्रन्थस्य । श्रीमद्भगवद्गीता नाम भारतीयानामस्माकं धार्मिकग्रन्थ इव राष्ट्रियग्रन्थोऽपि वर्वर्ति । तत्त्वज्ञानविषये तु न कोऽपि ग्रन्थस्तत्तुलामधिरोढुमर्हति । भारतीयानां श्रद्धाभाजनं च सा । अतः **सारग्रन्थे** सा साद्यन्ता सङ्गृहीताऽस्माभिः ।

(इ) **सारग्रन्थे** तत्तत्स्थाने प्रतिप्रकरणं नामनिर्देशसत्त्वात्कतमस्य विषयस्य वर्णनं भविष्यतीति झटिति चित्तारूढं भवति वाचकानाम् ।

(ई) **सारग्रन्थे** सङ्गृहीतश्लोका महाभारतस्य यस्मादध्यायाद्गृहीतास्तदध्यायनिदर्शका अङ्का अपि वामभागे मुद्रिताः सन्ति । तेन मूलपुस्तके तत्तत्सन्दर्भदर्शनं सुलभं सम्भविष्यति ।

( उ ) **सारग्रन्थे** वर्णानुक्रमेण प्रकरणसूची विद्यते। ततः स्वाभीष्टप्रकरणान्वेषणं सुकरं भवति।

( ऊ ) **सारग्रन्थे** प्रतिखण्डं महतायासेन शब्दार्थसङ्ग्रहस्यापि समावेशः कृतोऽस्ति। अस्य द्विसहस्राधिकशब्दार्थस्य च्छात्राणां महानुपयोगो भवेत्।

( ऋ ) **सारग्रन्थे** महाराष्ट्रभाषया राष्ट्रभाषया च लिखितेन सारांशेन संस्कृतभाषानभिज्ञानामपि तत्तत्पर्वपरिचयः सङ्क्षेपतो भवेदेव।

( ४ ) अपि च साम्प्रतं श्री. वैद्यमहाशयानां सङ्क्षिप्तभारतं दुर्लभं मुद्रणबाह्यं च सञ्जातम्। अतः **सारग्रन्थसम्पादनोद्योगः** समारब्धोऽस्माभिः।

( ५ ) **सारग्रन्थस्य** प्रथमखण्डे विद्यमानां श्लोकाङ्कनिर्देशपद्धतिं दृष्ट्वा कैश्चिन्महाभागैर्या सूचना कृता, तदनुसारेण द्वितीयतृतीयखण्डयोः श्लोकाङ्कपद्धतिराश्रिता दृश्येत। कुत्रचिदेकस्यां पङ्क्तौ वाक्यसमाप्तिस्त्वात्तत्रैव श्लोकाङ्को दृश्येत क्वचित्पङ्क्तिद्वये कुत्रचित्पङ्क्तित्रयेऽपि। इयं परिपाटी यावच्छक्यमनुसृतास्ति।

( ६ ) पाणिनीयव्याकरणदृष्ट्या परसवर्णस्य यत्रावश्यकता विद्यते तादृशस्थलेऽपि मुद्रणसौकर्यार्थं बहुत्र परसवर्णो न कृतः। तदेतत्सर्वं सुधीभिरवधेयम्।

( ७ ) सङ्क्षेपकरणाय पुण्यपत्तनस्थचित्रशालामुद्रणालये मुद्रितं श्रीनीलकण्ठीटीकासमेतं श्रीमहाभारतपुस्तकं स्वीकृतम्। अतस्तन्मुद्रणालयाध्यक्षाणामुपकारं सादरं स्मरामः।

( ८ ) अन्ते च येषां भूरिभागधेयानां प्रेरणाया ग्रन्थरत्नश्रीमहाभारतपरिशीलनसञ्जातानन्दसन्दोहवशाद्वर्षत्रयमिदं मुहूर्तवद्व्यतिक्रान्तं तेभ्यः पुष्पपुरी ( पुसद ) निवासिभ्यः श्री. शङ्करराव सरनाईकमहोदयेभ्यः शतशो धन्यवादान्समर्प्य, यस्यानुकम्पया **श्रीमहाभारतसारसङ्ग्रहे** वयं निमित्तीभूतास्तं सर्वान्तर्यामिणं भगवन्तं **वासुदेवं** सप्रश्रयं साञ्जलिबन्धमभिवाद्य च विरमामः।

**सर्वेऽत्र सुखिनः सन्तु सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात्॥**

ॐ तत्सत्।

॥ श्रीः ॥

# ॥ प्रकाशकनिवेदनम् ॥

## ॥ संस्कृतं संस्कृतेर्मूलम् ॥

(१) अस्य **श्रीमहाभारतसारग्रन्थस्य** प्रथमः खण्डः श्रीशालिवाहन-शकस्य १८७६ तमे वर्षे गुरुपौर्णिमायां (आषाढ शु॥ १५) प्रकाशं नीतः। वर्षद्वयानन्तरम् अद्य तस्य ग्रन्थस्य द्वितीय-तृतीयभागयोः प्रसिद्धिप्रसङ्गः ईश्वरानुग्रहेण प्राप्तः इति अतीव प्रमुदितं मे चेतः। महाभारतस्य समग्राष्टा-दशपर्वणां सङ्क्षेपस्य विचारः वर्षपूगात्प्रागेव मन्मनसि कृतपदः आसीत्। स विचारः सम्पादकमण्डलानुग्रहेण मूर्ततां प्राप्त इति हेतोस्तदभिवादनं प्रथममेव करोमि।

(२) चतुरशीतिसहस्रश्लोकात्मकस्य महाभारतस्य खण्डत्रयात्मकोऽयं **सारसङ्ग्रहः** किञ्चिन्न्यूनषोडशसहस्रमितश्लोकैर्विहितोऽस्ति। द्वादशसहस्र-श्लोकैरयं सङ्ग्रहः परिपूर्णः स्यादिति प्रथमं तर्कितमासीत्। परं तदशक्यं वीक्ष्य एतावान् विस्तरः क्रमप्राप्तोऽभूत्। वस्तुतस्तु महाभारतस्य सारसर्वस्वं तत्तृतीयांशं गृहीत्वा न्यूनातिन्यूनत्रिंशत्सहस्रश्लोकैर्भवेत्। किन्तु एतद्भाग-त्रयमुद्रणार्थमेव महान् द्रव्यव्ययः सञ्जातोऽस्ति। अतस्त्रिंशत्सहस्रश्लोकात्मक-सङ्क्षेपस्य विचारः केवलं मनोरथरूपेणैव निर्दिष्टोऽस्ति।

(३) संस्कृतभाषाया अध्ययनाध्यापनवृद्ध्यर्थं व्याख्यान-लेखनपरिष-त्सम्मेलनादयो बहवः प्रयत्नाः सम्प्रति श्रवणगोचरा भवन्ति। अतीव सन्तोषा-स्पदमेव तत्। परं ते सर्वे प्रयत्ना मूलग्राहिदृष्ट्या, प्रसिद्धिपराङ्मुखवृत्त्या, आस्थाधिक्येन च विहिताश्चेत्, तदर्थं यो द्रव्यव्ययो भवति, स उचितस्थले योग्यकारणेन च भूत्वा दुग्धशर्करायोगवत् संस्कृतभाषाया अध्ययनाध्यापन-वृद्ध्यै कल्पेत इति भाति।

( ४ ) आङ्ग्लशासनकाले संस्कृतभाषाध्ययनारम्भोऽष्टमकक्षायामेव भवति स्म। सैव परिपाटी स्वतन्त्रभारते सर्वत्रावलम्बनीया। विद्यालय-महाविद्यालयेषु सर्वत्र संस्कृतभाषाध्ययनेनावश्यकेन भाव्यम्। तेन संस्कृतभाषा-प्रचारे प्रचुरतरं ( महत् ) साहाय्यं भवेत्।

( ५ ) एतद्देशीयशिक्षणविभागेभ्य इदं सविनयं निवेदयामि यत्, महाभारतस्य महत्तायास्तदध्ययनावश्यकतायाश्च समस्तविद्वद्वरसंमतत्वादयं **महाभारतसारो** विद्यालय-महाविद्यालयेषु पाठ्यत्वेन तैर्निवेशनीयः। अनुभवानुसारेण ग्रन्थोऽयं शनैःशनैरावश्यकपरिष्कारपुरःसरं शिक्षकाणां विद्यार्थिगणानां चाभ्यासयोग्यो भवितुं शक्येत। भारतीयच्छात्राणामेतद्-ग्रन्थाध्ययनमतीवावश्यकमिति मे मतम्।

( ६ ) संस्कृतभाषाप्रचारो नाम कस्यचिद्विशिष्टवर्गस्याधिकारवृद्धिरेवेति केषाञ्चिद्धारणा दृश्यते। परं भारतेतरदेशीया अपि महाभारतस्य महत्त्वं विज्ञाय तद्रसमाकण्ठं सेवितुं महतानन्देनाहमहमिकया पुरःसरा भवन्तीति ज्ञात्वा तादृश्यात्मनाशकरी विपरीतधारणा न केनापि कर्तव्या इति प्रार्थये।

( ७ ) **महाभारतसारस्य** देशभाषास्वनुवादा अवश्यं भवितुं योग्या अपि द्रव्याभावात् तत्कार्यमद्याशक्यमेव। ईशकृपया परिस्थितेरानुकूल्ये दृष्टे सोऽपि प्रयत्नो मया विधीयेत इत्येतदेव साम्प्रतं निवेदयितुं शक्यम्।

( ८ ) **महाभारतसार**सदृशग्रन्थस्य प्रकाशनं प्रचुरकष्टप्रदं विद्वत्तामूलकं, प्रभूतद्रव्यव्ययसाध्यं च वर्तते। ग्रन्थस्यास्य प्रकाशनं तु लोकाश्रयेणैव प्रवृत्तमस्ति। खण्डत्रयात्मकस्यास्य **महाभारतसारग्रन्थस्य** प्रकाशनार्थं सार्धषोडशसहस्ररूप्यकव्ययस्य नितरामावश्यकता विद्यते। परं प्रथमखण्ड-व्ययपर्याप्तमेव द्रव्यं प्राप्तम्। द्वितीय-तृतीयखण्डयोः प्रकाशनव्ययपरिपूर्णतायै सहृदयहृदयया जनतया खण्डत्रयक्रयणेनावश्यं द्रव्यसाहाय्यं करणीयमिति सप्रश्रयं विज्ञापयामि।

( ९ ) संस्कृतग्रन्थस्य मुद्रणं क्लिष्टतरं बहुलायाससाध्यं चेति विदितमेव सर्वेषाम्। बहुवारं शुद्धीकृतमपि दृष्टिविभ्रमादशुद्धं स्वस्थानस्थितमेव भवति। अपि च, शुद्धीकृतस्यापि मुद्रणसमये उकारौकारऋकाररेफादिचिह्नानि

स्थानभ्रष्टानि भवन्ति। अत एतादृशे अशुद्धिविषये क्षन्तव्यं वाचकमहोदयैः। अशुद्धानां न्यूनातिन्यूनतासम्पादनार्थं यावच्छक्यं प्रयतितमेव। अन्ते च शुद्धिपत्रमपि संयोजितमस्ति।

(१०) सम्पादकमण्डलेन तु भृशमुपकृतोऽस्मि। एतद्ग्रन्थप्रकाशनस्य सम्पादकमण्डलश्रमा एव निदानम्। अत एतद्ग्रन्थपूर्तिस्तस्यैव श्रमफलमिति विदांकरोमि।

मध्यप्रदेशराज्यपाल डॉ. पट्टाभि सीताराम अय्या महोदयैः, भूतपूर्व राज्यपाल डॉ. श्री. बापूजी अणे महाशयैः, बिहारराज्यपाल माननीय श्री. रंगराव दिवाकर महाभागैश्च यदमूल्यं साहाय्यं, मार्गदर्शनं च कृतम्, तेन एतद्ग्रन्थप्रकाशनं सुकरं सुशकं च सञ्जातम्।

पुण्यपत्तनस्थ श्री. ज. स. करंदीकर महाशयानां नागपूरस्थ साहित्याचार्य बालशास्त्रि हरदास महाशयानां, नागपूरस्थ महामहोपाध्याय श्री मिराशी महाशयानां च प्रस्तावनालेखनेनायं ग्रन्थः शोभाधिक्यं विद्वन्मान्यतां च प्राप्तोऽस्तीति मन्ये।

'उदय' 'तरुणभारत' 'केसरि' 'महाराष्ट्र' 'सारथि' 'संस्कृतभवितव्य' 'प्रसाद' 'पुरुषार्थ' 'महाराष्ट्रविस्तार' प्रभृतिभिर्वृत्तपत्रैर्मासिकपत्रैश्च महत्यास्थया स्वस्वाभिप्रायप्रकाशनेन बहुजनसमाजपर्यन्तमस्यग्रन्थस्योपयोगिता असंशयं प्रसिद्धिं प्रापिता।

'समर्थ भारत' मुद्रणालयव्यवस्थापकैः श्री. सरदेसाई महाशयैरस्य ग्रन्थस्य खण्डत्रयमपि विनैव कालातिक्रमं समीचीनतया मनोहारितया च मुद्रितम्।

पुष्पपुरी (पुसद) निवासिभिर्बहुभिर्धनिकैरन्यैश्च कतिपयसज्जनैरस्य ग्रन्थस्य प्रकाशनार्थं द्रव्यसाहाय्यं कृतमस्ति।

उपरिनिर्दिष्टानां सर्वेषामुपकर्तॄणामधमर्णोऽहं तेभ्यः सर्वेभ्यो हार्दिकधन्यवादान् समर्प्य विरमामि।

इति शम्

॥ श्रीः ॥

## परमपूजनीय सरसंघचालक श्री. मा. स. गोलवलकर महोदयैः महाराष्ट्रभाषायां लिखितायाः, श्रीमहाभारतसारप्रथमखण्डप्रशस्तेः संस्कृतसारांशः—

भारतीयसंस्कृतेर्द्रष्टारो मानवजीवनस्य साफल्यं चतुर्विधपुरुषार्थसम्पादनेन मन्यन्ते। धर्मार्थकाममोक्षाख्यचतुर्विधपुरुषार्थानां सर्वाङ्गपरिपूर्णं सर्वङ्कषं च दर्शनं महाभारतादन्यत्र न सम्भवति। अभ्युदय–निःश्रेयस–कर्माकर्म–विकर्म–नीत्यनीति–जातिधर्म–कुलधर्माणां निरपवादं ज्ञानं सम्पूर्णतया एकस्मादेव ग्रन्थात् प्राप्तव्यं चेत् तर्हि महाभारतमेव शरणीकरणीयम्, तदर्थं नान्यः पन्था विद्यते।

पुरुषार्थचतुष्टयमिव वर्णाश्रमचतुष्टयमिव च वीरव्रतचतुष्टयमपि शास्त्रकारा वर्णयाम्बभूवुः। युद्धवीर–दानवीर–दयावीर–धर्मवीरनामकानामेषां चतुर्विधवीराणाम् उत्कटा भव्याश्च आदर्शाः भीमसेन–कर्ण–शिबि–युधिष्ठिरादिरूपेण यथा महाभारते एकत्र समुपलभ्यन्ते तथा न कस्मिंश्चिदपि ग्रन्थेऽस्मिन् जगतीतले समुपलब्धुं शक्येरन्। अस्य चतुर्विधवीरजीवनस्य बाल्य एव दृढतरसंस्कारवशात् पुण्यश्लोक श्री **शिवछत्रपतिसदृशः 'पुरुषोत्तमः'** भारतेन लब्धः। अस्य वीरव्रतस्योपदेशः सामान्यजनसुलभया उद्बोधकपरिपाट्या महाभारते यत्र तत्र विहितोऽस्ति।

सर्वासु भारतीयदेशभाषासु शतकानुशतकं महाभारतीयकथाश्रवणेन सहस्रशः काव्यनाटकादिग्रन्था विद्वद्वरैर्निर्मिताः समुल्लसन्ति। तद्द्वारैव महाभारतीयदिव्यरसास्वादं सामान्यजना अनुभवन्ति। संस्कृतभाषाध्ययनस्य अल्पप्रसरत्वात् महाभारतग्रन्थावगाहनं स्थगितप्रायमासीत्। अतः सुशिक्षितसमाजं महाभारताध्ययने प्रवर्तयितुं महाभारतस्वरूपस्य सम्यक् परिचयार्थं च यादृशग्रन्थस्य आवश्यकता आसीत् तादृशोऽयं **महाभारतसारग्रन्थः** प्रकाशककृपया समुपलब्धोऽस्ति। महाभारतस्य निकटपरिचयः संस्कृतभाषाध्ययनं च द्वयमपि एतद्ग्रन्थवाचनेन सम्पादयितुं शक्येत। यथा मातुः प्रदक्षिणया पृथ्वीप्रदक्षिणाफलं हस्तगतं भवति, यथा समुद्रस्नानेन सर्वतीर्थस्नानफलं लभ्यते, यथा वा सुधास्वादनेन सर्वरसास्वादानन्दोऽनुभवितुं शक्यते, एवमेव अस्य **'महाभारतसार'** ग्रन्थस्य वाचनेन **महाभारतवाचनानन्दो** भविष्यतीत्यत्र नास्ति संशयलेशोऽपि।

अतः अस्य **'महाभारतसार'** ग्रन्थस्य अवशिष्टखण्डद्वयप्रकाशनार्थं जनताजनार्दनः द्रव्यरूपेण प्रकाशकसाहाय्यं करोतु इति प्रार्थये।

**गोलवलकरोपाह्व सदाशिवतनुजन्मा माधवशर्मा**
**सरसंघचालकः।**

# महाभारतसारस्य विषयसूचिः

पृष्ठाङ्कः



पृष्ठाङ्कः

## महाभारतसारांतील ‘ भीष्मपर्वा ’चा मराठी सारांश

जनमेजय राजानें विचारल्यावरून वैशम्पायन ऋषी पुढें सांगूं लागले.

दोन्ही सैन्यें कुरु-क्षेत्रावर आल्यानंतर युद्धाचे नियम ठरविण्यांत आले. दोन्ही सैन्यें युद्ध करण्यास सिद्ध झालेलीं पाहून व्यासमहर्षी धृतराष्ट्राला म्हणाले,

“ तुला युद्ध पाहण्याची इच्छा असल्यास मी तुला दिव्यदृष्टि देतों. ” त्यानें नको म्हटल्यावर व्यास ऋषींनीं सञ्जयाला वर दिला. “ याला सर्व ज्ञान दिव्यदृष्टीनें होईल, आणि हा तुला युद्धाची वार्ता सांगेल. ” त्यानंतर व्यास ऋषी व सञ्जय दोघेही निघून गेले. नंतर दहाव्या दिवशीं संध्याकाळीं येऊन सञ्जयानें भीष्म-पितामह युद्धांत पडल्याचें धृतराष्ट्राला सांगितलें. तें ऐकून कांहीं वेळ शोक केल्यावर धृतराष्ट्रानें युद्धाचें सर्व वर्तमान ऐकण्याची इच्छा दर्शविल्यावरून सञ्जय सांगूं लागला.

सूर्योदय झाल्याबरोबर दोन्ही सैन्यें शस्त्रास्त्रांनीं सज्ज झालीं. रणवाद्यें वाजूं लागलीं. भीष्मांनीं सर्वांना उत्साह येईल असें भाषण केलें. श्रीकृष्णाच्या सांगण्यावरून अर्जुनानें आपल्याला जय मिळावा म्हणून देवीची स्तुति केली. देवीनें तसा वर दिल्यावर अर्जुन रथांत बसला. नंतर श्रीकृष्ण व अर्जुन यांनीं आपापले शंख मोठ्यानें वाजविले. तेव्हां पाण्डवांकडील सर्वच मोठ-मोठ्या वीरांनीं शंख वाजविले. आतां युद्धाला प्रारंभ होणार, अशा वेळीं अर्जुनानें आपला रथ दोन्ही सैन्यांच्या मध्यभागीं उभा करण्यास श्रीकृष्णांना सांगितलें. तेथें रथ गेल्यावर अर्जुनानें दोन्ही सैन्यांत ‘ कोणी आपले गुरु आहेत, कोणी आजे, पणजे, इष्ट, मित्र, बंधु, पुत्र, नातू इत्यादीच आहेत. ’ असें पाहिलें, आणि यांना मारून राज्य मिळविण्यापेक्षां भिक्षा मागून पोट भरलेलें बरें, असें श्रीकृष्णांना सांगितलें; व त्या विचारानें किंकर्तव्यमूढ होऊन हातांतलें धनुष्य टाकून हातपाय गाळून तो मटकन रथांत बसला. अर्जुनाचा तो मोह दूर करण्याकरितां श्रीकृष्णांनीं त्याला गीता सांगितली.

अर्जुनाला दोन प्रकारचा मोह झाला होता. भीष्मादिकांच्या शरीरांच्या नाशाबरोबर त्यांच्या आत्म्याचा नाश होतो, हा एक आणि क्षत्रियाचा धर्म, जें युद्ध त्याला तो अधर्म समजत होता आणि भिक्षा मागणें हा जो अधर्म त्याला तो धर्म समजत होता, हा दुसरा मोह. म्हणजे अर्जुन अविनाशी आत्म्याला नाशिवंत, धर्माला अधर्म, आणि अधर्माला धर्म समजत होता. म्हणून " आत्म्याचा नाश कोणीच करूं शकत नाहीं, आणि तूं क्षत्रिय असल्यामुळें युद्ध करणें हा तुझा धर्मच आहे. तो तुला टाकतां येणार नाहीं. टाकशील तर तुला पाप लागेल; परंतु युद्धांत तुला जर पापाची भीति वाटत असेल तर कर्तव्यकर्म करीत असतां पातक न लागण्याची युक्ति अशी आहे कीं, जय-पराजय, लाभ-हानि, सुख-दुःख यांमध्यें तूं समबुद्धि ठेव." असा श्रीकृष्णांनीं उपदेश केल्यावर अर्जुन युद्धाला पुन्हां सिद्ध झाला. पुन्हां शंख वाजले. देव, गंधर्व, सिद्ध इत्यादि युद्ध पाहण्यासाठीं आकाशांत जमले.

इतक्यांत धर्मराजा शस्त्र खालीं ठेवून, चिलखत काढून, हात जोडून मुकाट्यानें पायींच पूर्वेकडे असलेल्या कौरव-सैन्यांत जाण्यास निघाला. त्याच्या मागून त्याचे बन्धू, श्रीकृष्ण व मुख्यमुख्य राजेही निघाले. धर्मराजानें जाऊन भीष्म, द्रोण, कृप, शल्य यांची स्वतःला जय मिळण्यासाठीं प्रार्थना केली. त्यांपैकीं भीष्मांनीं सांगितलें कीं, " तूं पुन्हां केव्हांतरी ये. म्हणजे मला जिंकण्याचा उपाय मी तुला सांगेन." द्रोणाचार्यांनीं सांगितलें कीं, "मी शस्त्र खालीं ठेवीन, तेव्हांच कोणी माझा वध करूं शकेल. एरव्हीं नाहीं." सर्वांनींच तुझा ' जय ' होईल असा धर्मराजाला आशीर्वाद दिला. इतकें झाल्यावर धर्मराजा आपल्या सैन्यांत येण्यास निघाला. तितक्यांत श्रीकृष्णांनीं कर्णाला गांठून सांगितलें कीं, भीष्म युद्धांत असेपर्यंन्त तूं जर कौरवांकडून युद्ध करणार नाहींस, तर तोंपावेतों पाण्डवांकडून युद्ध कर. पण ती गोष्ट त्यानें मान्य केली नाहीं. धर्मराजा दोन्ही सैन्यांच्या मध्यें उभा राहून मोठ्यानें म्हणाला, " कौरवांचा पक्ष सोडून आमच्याकडे येण्याची ज्याची इच्छा असेल, त्यानें यावें." तें ऐकून धृतराष्ट्राचा पुत्र युयुत्सु पाण्डवां-

कडे आला. नंतर धर्मराजा सर्वांबरोबर आपल्या सैन्यांत येऊन युद्धाला सिद्ध झाला.

( १ ) पहिल्या दिवशीं भीष्मांनीं दिवसभर घनघोर युद्ध केलें. विराट-राजाचा पुत्र श्वेत याचा वध केला, आणि पाण्डवांकडचें पुष्कळ सैन्य मारलें. भीष्मांचा पराक्रम पाहून आज आपल्याला जय मिळत नाहीं, असें समजून संध्याकाळीं पाण्डवांनीं युद्ध थांबविलें. तेव्हां दोन्ही सैन्यें आपापल्या निवास-स्थानीं ( शिबिरांत ) गेलीं.

( २ ) दुसऱ्या दिवशीं सकाळींच सैन्याचा क्रौंच-व्यूह करून पाण्डव सूर्योदयाची वाट पाहत राहिले. सूर्योदय झाल्यावर भीष्मांनीं महा-व्यूह रचलेलें कौरव-सैन्य पांडवांवर चालून आलें. या दिवशींसुद्धां भीष्मांनीं पाण्डव-सैन्याचा फार नाश चालविला, तेव्हां त्यांच्याशीं युद्ध करण्यास अर्जुन आला. कोणी कोणास जिंकूं शकले नाहींत. त्याच वेळीं भीमानें कलिंग-देशचा राजा श्रुतायु आणि निषाद-राज केतुमान् यांचा वध केला, आणि त्यांच्या सैन्यांचा असा नाश केला कीं, भीम म्हणजे प्रत्यक्ष ' काळ 'च आहे, असें कौरव-सैन्याला वाटलें. तेव्हां भीष्म भीमाबरोबर युद्ध करण्यास आले. इतक्यांत सात्यकीनें भीष्मांचा सारथी मारला. त्याबरोबर घोडे उधळून ते युद्ध-भूमीच्या बाहेर भीष्मांचा रथ घेऊन गेले. दुर्योधनाचा पुत्र लक्ष्मण आणि अभिमन्यु यांचें युद्ध होऊं लागलें. तेव्हां त्यांच्या साह्याला एकीकडून दुर्योधन आणि दुसरीकडून अर्जुन आले. त्या वेळीं अर्जुनानें रथ, घोडे, हत्ती, पायदळ जो जो कोणी पुढें उभा राहील, त्याचा नाश करण्याचा सपाटा चालविलेला पाहून कौरव-सैन्य पळून जाऊं लागलें. इतक्यांत सूर्य मावळ-ण्याची वेळ झाल्यामुळें भीष्मांनीं युद्ध थांबविलें आणि दोन्ही सैन्यें आपापल्या निवासस्थानीं ( शिबिरांत ) निघून गेलीं.

( ३ ) तिसऱ्या दिवशीं भीष्मांनीं सैन्याचा गरुड-व्यूह आणि पाण्डवांनीं अर्ध-चंद्र-व्यूह केला होता. युद्धाला प्रारंभ झाल्यावर अर्जुनानें कौरव-सैन्याचा फारच नाश केल्यामुळें तें सैन्य पळून जाऊं लागलें. दुर्योधनानें त्यांना धीर दिल्यावर तें परत युद्धाला आलें. पण दुर्योधन भीष्म-द्रोणांकडे जाऊन म्हणूं लागला, " तुम्ही मनापासून युद्ध करीत नाहीं, पांडवांवर

तुमची दया दिसते. तुम्ही असतांना पांडवांना जय मिळणें मला योग्य दिसत नाहीं. तेव्हां मनापासून युद्ध करा." तें ऐकून भीष्म हंसले, आणि रागानें डोळे वटारून दुर्योधनाला म्हणाले, "आतांपावेतों कितीतरी वेळां तुला सांगितलें आहे कीं, पाण्डव हे अजिंक्य आहेत. मी वृद्ध झालों आहें. माझ्या शक्तीप्रमाणें मी युद्ध करतोंच आहें." कौरवांचें सैन्य पुन्हां युद्धाला आल्यावर अर्जुनानें महेन्द्र-अस्त्राचा प्रयोग केला. त्या अस्त्रानें कौरव-सैन्याचा पुष्कळच नाश झाला. तेव्हां सन्ध्याकाळ झाली म्हणून भीष्मांनीं युद्ध थांबविलें. तें पाहून पाण्डव-सैन्य सुद्धां जय मिळाला म्हणून मोठ्या आनन्दानें आपल्या निवास-स्थानीं ( शिबिरांत ) गेलें.

( ४ ) चवथ्या दिवशीं सकाळीं पुन्हां दोन्ही सैन्यें समोरासमोर आलीं, वाद्यें वाजूं लागलीं आणि युद्धाला प्रारंभ झाला. दुर्योधनाला पाहून त्याला मारण्यास भीम वेगानें धावला. तोंच दुर्योधनानें मगध-देशचें दहा सहस्र [ १०,००० ] हत्तींचें सैन्य भीमावर धाडलें. त्याचा वध भीम-सेनानें केल्यावर " ह्या भीमाला सर्वजण मिळून मारा," असें रागानें दुर्योधन म्हणाला. त्याबरोबर त्याचे चवदा ( १४ ) भाऊ भीमावर तुटून पडले. त्यांपैकीं आठजणांस भीमानें मारल्यावर इतर पळून गेले. इतक्यांत भगदत्त हत्तीवर बसून भीमावर चालून आला. तेव्हां घटोत्कच त्याला आडवा आला. घटोत्कच माया प्रगट करून जेव्हां युद्ध करूं लागला तेव्हां "आतां सन्ध्याकाळ होत आहे, या वेळीं या दुष्ट राक्षसाबरोबर युद्ध केल्यास जय मिळणार नाहीं. आपण थकून गेलों आहोंत, पाण्डवांच्या शस्त्रांनीं घायाळ झालों आहोंत, म्हणून उद्यांच युद्ध करूं." असें भीष्मांनीं द्रोणाचार्य व दुर्योधन यांना सांगून युद्ध थांबविण्याची आज्ञा केली. तेव्हां कौरवांचें सैन्य आपल्या निवासस्थानीं ( शिबिरांत ) गेलें, आणि पाण्डव-सैन्यही आपल्या निवासस्थानीं ( शिबिरांत ) गेलें.

( ५ ) पांचव्या दिवशीं सकाळीं कौरव भीष्मांना पुढें करून आणि पाण्डव भीमाला पुढें करून युद्ध करूं लागले. भीष्मांनीं भीमावर बाण मारल्यावर भीमानें त्यांच्यावर शक्ती फेकली. भीष्मांनीं बाण मारून शक्ती तोडून टाकली. इतक्यांत भीमानें हातांत धनुष्य घेतलें, तेंही भीष्मांनीं तोडलें. तें

पाहून सात्यकी भीष्मांवर बाण मारूं लागला. भीष्मांनीं त्याचा सारथी पाडला. तेव्हां घोडे सात्यकीचा रथ दूर घेऊन गेले. त्यानंतर भीष्मांनीं पाण्डव-सैन्यांतील वीरांचा नाश केला. पुन्हां सात्यकी बाण सोडीत आलेला पाहून दुर्योधनानें त्याच्यावर दहासहस्र [ १०,००० ] रथ पाठविले. त्यांचा नाश सात्यकीनें केला. तेव्हां मोठ्या रागानें भूरिश्रवा सात्यकीवर चालून आला. सात्यकीचे दहा पुत्र त्याला अडवून युद्ध करूं लागले. त्यांचें तें युद्ध पुष्कळ वेळ चाललें. शेवटीं भूरिश्रव्यानें सात्यकीच्या दहा पुत्रांचीं अगोदर धनुष्यें आणि नंतर मस्तकेंही तोडलीं. तें पाहून सात्यकीला फार राग आला. तो भूरिश्रव्यावर वेगानें चालून आला. त्या दोघांचें भयंकर युद्ध झालें. दोघांनींही एकमेकांचे घोडे मारल्यावर हातांत ढाल-तलवार घेऊन युद्ध करण्यास प्रारंभ केला. तेव्हां भीमानें सात्यकीला आणि दुर्योधनानें भूरिश्रव्याला आपल्या रथांत घेतलें.

याच वेळीं भीष्मांनीं पाण्डवांच्या सैन्याचा फार नाश चालविल्यामुळें अर्जुन युद्धाला समोर आला. तेव्हां दुर्योधनानें पंचवीस सहस्र [ २५,००० ] रथी त्याच्यावर पाठविले. अर्जुनानें त्यांचा नाश करीपर्यंन्त सूर्यास्त होऊन दिसेनासें झाल्यामुळें युद्ध थांबवून दोन्ही सैन्यें आपापल्या निवासस्थानीं ( शिबिरांत ) गेलीं.

( ६ ) रात्रभर विसांवा घेऊन सहाव्या दिवशीं सकाळीं पुन्हां युद्धासाठीं दोन्ही सैन्यें रणभूमीवर आलीं. भीम द्रोणाचार्यांवर चालून गेला. द्रोणाचार्यांनीं भीमावर नऊ बाण मारले. उलट भीमसेनानें बाण सोडून द्रोणाचार्यांचा सारथी मारला. तेव्हां घोड्यांचे लगाम धरून रथ चालविणें आणि युद्ध करणें अशीं दोन्ही कामें करून द्रोणाचार्यांनीं पाण्डव-सैन्याचा फार नाश केला. ह्याप्रमाणेंच भीष्मांनींही नाश केला, आणि भीमार्जुनांनीं कौरव-सैन्याचाही तसाच नाश केला. नंतर भीम कौरव-सैन्याची फळी फोडून आंत घुसला. त्याला जिवंत धरण्याच्या हेतूनें पुष्कळ वीर त्याला वेढून युद्ध करूं लागले. तेव्हां भीमसेन हातांत गदा घेऊन रथावरून खालीं उतरला. त्यानें त्या गदेनें त्या सर्व सैन्याचा नाश केला. भीम कौरव-सैन्यांत शिरलेला पाहून त्याला मदत ( साह्य ) करण्यास धृष्टद्युम्न आला. त्यानें भीमाला

आपल्या रथावर घेतलें, आणि प्रमोहनास्त्र सोडून कौरव-सैन्याला मोहित केलें. त्यामुळें काय करावें हें न सुचून तें सैन्य इतस्ततः धावूं लागलें. तें पाहून द्रोणाचार्यांनीं प्रज्ञास्त्र सोडून प्रमोहनास्त्राचा नाश केला. ह्याप्रमाणेंच अभिमन्यु व विकर्ण, दुःशासन व केकयदेशाचे पांच वीर, दुर्योधन आणि द्रौपदीचे पांच पुत्र यांचें युद्ध झालें. त्याच वेळीं भीष्म उत्तरेकडे पाण्डव-सैन्याचा व अर्जुन दक्षिणेकडे कौरव-सैन्याचा नाश करीत होते. सूर्यास्ताच्या वेळीं दुर्योधन भीमावर चालून गेला. भीमानें त्याच्या रथाचे घोडे मारले आणि बाणांनीं दुर्योधनाला मूर्च्छित पाडलें. भीष्मांनीं पाण्डव-सैन्याचा पुष्कळ नाश केल्यावर सूर्यास्त झाला, म्हणून युद्ध थांबविलें, आणि दोन्ही सैन्यें आपापल्या निवासस्थानीं ( शिबिरांत ) गेलीं.

भीमाच्या बाणांनीं रक्तबंबाळ झालेला दुर्योधन भीष्मांकडे गेला. भीष्म-पितामहांनीं त्याला अेक वनस्पती दिली. त्या वनस्पतीनें दुर्योधनाच्या शरीराला झालेले सर्व घाव बरे झाले.

( ७ ) सातव्या दिवशीं सकाळीं पुन्हां युद्धाला प्रारंभ झाला. कौरवांकडे मण्डल-व्यूह आणि पाण्डवांकडे वज्र-व्यूह होता. त्या दिवशीं दोन्हीकडचे वीर फार निकरानें लढत होते. युद्ध करतां करतां भीष्मांचा रथ धर्मराजाच्या रथा-जवळ आला. दोघांनींही एकमेकांवर शेंकडों बाण मारले. इतक्यांत भीष्मांनीं धर्मराजाच्या रथाचे घोडे मारले. तेव्हां तो नकुलाच्या रथावर जाऊन बसला. त्यानें आपल्या सर्व सैन्याला आज्ञा केली कीं, "सर्वजण मिळून भीष्मांचा नाश करा." तें ऐकून पाण्डवांचें पुष्कळ सैन्य भीष्मांच्या भोंवतालीं जमून युद्ध करूं लागलें. त्या वेळीं भीष्मांच्या बाणांनीं पाण्डव-सैन्याचीं मस्तकें ताडाच्या फळांप्रमाणें तुटून पटापट खालीं पडूं लागलीं. द्रोणाचार्यांनींही पाण्डव-सैन्याचा फार नाश केला. सूर्यास्तापर्यंत युद्ध झालें. रक्ताची नदी वाहूं लागली. रक्त, मांस खाण्यासाठीं कोल्हे, राक्षस, पिशाच सर्वत्र दिसूं लागले. तेव्हां सर्व सैन्य युद्ध थांबवून शिबिरांत ( निवासस्थानीं ) गेलें.

( ८ ) आठव्या दिवशीं सकाळीं पुन्हां युद्धाला प्रारंभ झाला. भीष्मांच्या बाणांनीं पाण्डव-सैन्याचा अतोनात नाश होऊं लागला. तेव्हां धर्मराजानें सर्व सैन्याला भीष्मांवर चालून जाण्याची आज्ञा केली. भीष्माच्या साह्याला दुर्योधन

बन्धूंसह आला. तेव्हां भीमानें भीष्मांचा सारथी मारला, त्यामुळें त्यांचा रथ निघून गेल्यावर सुनाभ इत्यादि तुझ्या [ धृतराष्ट्र ] पुत्रांचा नाश भीमानें केला. दुर्योधनाला फार दुःख झालें. तो भीष्मपितामहांकडे गेला, आणि भीम सर्वांचा नाश करीत आहे असें म्हणाला. भीष्मांनीं सांगितलें, "पूर्वीं आमचें तूं ऐकलें नाहींस. भीम तुमच्यापैकीं कोणालाच जिवंत ठेवणार नाहीं. तरी आतां युद्ध कर." पुढें युद्ध होत असतां अलंबुष राक्षसानें अर्जुनाचा पुत्र इरावान् याचा वध केला. ऐरावत नागाची सून विधवा झाली. कारण गरुडानें तिचा पति मारला. तिला पुत्र नसल्यामुळें ऐरावतानें अर्जुनाकडून पुत्र उत्पन्न करवून घेतला. त्याचें नांव इरावान् होतें. त्याचा वध अलंबुष राक्षसानें केलेला पाहून घटोत्कचाला फार राग आला. त्यानें माया उत्पन्न केली. त्या मायेमुळें कौरव-सैन्यांतील प्रत्येकाला असें दिसूं लागलें कीं, ' सर्वजण मरून पडत आहेत.' तें पाहून कौरव-सैन्य पळूं लागलें.

सञ्जय म्हणतो, मी व भीष्म दोघेही ओरडून सांगत होतों कीं, ही माया आहे, युद्ध करा, पळूं नका. पण आमचें कोणीच ऐकेना, पळतच सुटले. तेव्हां भीष्मपितामह पुन्हां पाण्डव-सैन्याचा नाश करूं लागले. भीमसेन पुढें घुसला. त्याला तुझे पुत्र आडवे आले. कित्येकांचा भीमानें वध केला. उरलेले पळून गेले. भीष्म, भगदत्त व कृपाचार्य यांचें युद्ध अर्जुनाबरोबर चाललें. त्या युद्धांत दोहोंकडील पुष्कळ हत्ती, घोडे, रथ व पायदळ यांचा नाश झाला. सूर्यास्त झाला तरी युद्ध चाललेंच होतें. पण अंधःकार पडल्यावर कांहीं दिसेना म्हणून युद्ध थांबवून दोन्ही सैन्यें आपापल्या निवास-स्थानीं ( शिबिरांत ) गेलीं.

त्या रात्रीं दुर्योधन, दुःशासन, शकुनि आणि कर्ण ही चौकडी ' पाण्डवांचा नाश कसा करावा ' याचा विचार करूं लागली. कर्णानें सांगितलें, " दुर्योधना ! भीष्मपितामहांच्या मनाचा ओढा पाण्डवांकडे आहे. ते कांहीं मनापासून युद्ध करीत नाहींत. तूं त्यांना शस्त्र खालीं ठेवण्यास सांग. म्हणजे मी सर्व पाण्डवांचा नाश करून टाकतों." दुर्योधनानें जाऊन भीष्मपितामहांना तसें सांगितलें. तें ऐकून त्यांना राग आला, पण रागानें न बोलतां ते एवढेंच म्हणाले कीं, " विराटनगरांत अर्जुनानें सर्वांचीं वस्त्रें

फेडून नेलीं, घोषयात्रेच्या वेळीं गन्धर्वांनीं तुम्हां सर्वांना बांधून चालविलें, त्या वेळीं कर्णाचा पराक्रम कोठें गेला होता? असो. उद्यां मी असा पराक्रम करतों कीं, सर्व लोक स्तुती करतील. मात्र मी शिखण्डीला मारणार नाहीं. तो जन्मतः स्त्री होता. नंतर एका यक्षानें त्याला पुरुष केलें आहे. त्यामुळें त्याच्यावर मी बाण मारणार नाहीं." तें ऐकून दुर्योधन आपल्या स्थानावर येऊन झोपीं गेला.

( ९ ) नवव्या दिवशीं भीष्मपितामहांनीं सैन्याचा सर्वतोभद्र-व्यूह केला, व पाण्डवांनीं महा-व्यूह केला. युद्धाला आरंभ झाला. त्या दिवशीं भीष्मांनीं असा पराक्रम केला कीं, जो जो पुढें आला, त्याचा त्याचा नाश झाला. कोणीच पुढें जाण्यास धजेना. सर्व पाण्डव-सैन्य पळूं लागलें. तें पाहून श्रीकृष्णांनीं अर्जुनाचा रथ भीष्मांच्या रथापुढें आणून उभा केला. भीष्म आणि अर्जुन यांचें युद्ध होऊं लागलें. पण भीष्मांपुढें अर्जुनाचा पराक्रम तोकडा पडत आहे, असें पाहून श्रीकृष्णांनीं घोड्यांचे लगाम सोडून देऊन हातांत सुदर्शन-चक्र घेतलें आणि ते भीष्मांना मारण्यास निघाले. तेव्हां कौरव-सैन्यांत एकच हाहाःकार झाला.

इतक्यांत अर्जुन पळत आला. त्यानें श्रीकृष्णांचे पाय घट्ट धरले, आणि "तुम्ही हातांत शस्त्र न धरण्याची प्रतिज्ञा मोडूं नका. मी युद्ध करतों" असें सांगितलें. तेव्हां पुन्हां श्रीकृष्ण व अर्जुन रथावर बसले व युद्ध चालू झालें. रक्ताचे पाट वाहूं लागले. कित्येकांचीं मस्तकें, हात, पाय तुटून पडले. पण भीष्मांपुढें पाण्डवांचें कांहींच चालेना. पाण्डव-सैन्य पळूं लागलें. इतक्यांत सूर्यास्त झाल्यामुळें धर्मराजानें युद्ध थांबविलें. आणि दोन्ही सैन्यें आपापल्या निवास-स्थानीं ( शिबिरांत ) निघून गेलीं.

त्या दिवशीं पाण्डव-सैन्याचा फारच नाश झाल्यामुळें शिबिरांत आल्यावर धर्मराजा मोठ्या दुःखानें श्रीकृष्णांना म्हणाला, "मला हें युद्ध नको, राज्य नको, मी आपला अरण्यांत जाऊन देहाचें सार्थक करीन. भीष्मपितामहांपुढें युद्ध करण्यांत व्यर्थ मरण्यापेक्षां तपश्चर्या केलेली काय वाईट?" तें ऐकून श्रीकृष्ण म्हणाले, "तूं मला आज्ञा कर. मी काय, अर्जुन काय, दोघे एकच आहोंत. मी उद्यां भीष्मपितामहांचा वध करतों." पण धर्मराजानें

ती गोष्ट मान्य केली नाहीं. त्यानें सांगितलें कीं, " भीष्म मला पहिल्याच दिवशीं म्हणाले आहेत कीं, " 'तूं पुन्हां केव्हांतरी ये. म्हणजे मला जिंकण्याचा उपाय सांगेन.' त्याप्रमाणें आपण भीष्मांकडेच जाऊं या.'' धर्मराजाचें तें बोलणें सर्वांना पटलें. ते सर्व भीष्मपितामहांकडे गेले. भीष्मांनीं त्यांचें मोठ्या आनंदानें स्वागत केलें. धर्मराजानें भीष्मांना जिंकण्याची युक्ती विचारली. भीष्म म्हणाले, " तुम्ही शिखण्डीला पुढें करा. मी त्याच्याकडे पाठ फिरवीन. कारण तो स्त्रीपूर्व आहे. त्याच्या आड राहून अर्जुनानें माझ्यावर बाण सोडावे. म्हणजे मी पडेन." तें ऐकून पाण्डव आपल्या निवास-स्थानीं ( शिबिरांत ) आले.

( १० ) दहाव्या दिवशीं युद्धाला प्रारंभ झाल्यावर भीष्मांनीं पाण्डवांचें पुष्कळ सैन्य मारलें. तेव्हां धर्मराजाच्या आज्ञेवरून अर्जुनानें शिखण्डीला पुढें करून भीष्मांवर इतके बाण मारले कीं, भीष्मपितामहांच्या अंगावर दोन बोटेंसुद्धां अंतर बाणांवांचून राहिलें नाहीं. ते बाण लागल्यावर भीष्म त्या बाणांसुद्धां रथांतून खालीं पडले. देवांनीं त्यांच्यावर पुष्प-वृष्टि केली. पडतां पडतां ' सूर्य दक्षिण दिशेकडे आहे ' ही गोष्ट त्यांच्या ध्यानांत आली. म्हणून उत्तरायण लागेपर्यन्त बाणांच्या शय्येवर ते तसेच पडून राहिले.

भीष्म पडल्यावर युद्ध थांबवून दोन्हीकडचे वीर भीष्मपितामहांजवळ येऊन नमस्कार करून उभे राहिले. त्यांचें स्वागत करून भीष्म म्हणाले; " माझें मस्तक लोंबत आहे. त्याला आधार पाहिजे." तें ऐकून पुष्कळांनीं मऊ मऊ उशा आणल्या. त्या पाहून भीष्म हंसले. त्यांनीं अर्जुनाकडे पाहिलें. भीष्मांच्या मनांतील अभिप्राय ओळखून अर्जुनानें तीन बाणांची उशी होईल असे बाण मारले. त्यामुळें भीष्मांच्या लोंबणाऱ्या मस्तकाला आधार मिळाला. नंतर भीष्म पडले होते, तेथें त्यांच्या भोंवतालीं खंदक खणून त्यांच्या संरक्षणाची व्यवस्था केल्यावर सर्वजण भीष्मांची आज्ञा घेऊन मोठ्या दुःखानें आपापल्या ठिकाणीं गेले.

दुसऱ्या दिवशीं सकाळींच पुन्हां सर्व मंडळी आलेली पाहून भीष्मांनीं पाणी मागितलें. कित्येकांनीं खाण्याचे पदार्थ व पाण्याचे कलश आणले. पण हे आतां माझ्या काय उपयोगाचे? असें म्हणून भीष्मपितामहांनीं

अर्जुनाला पाणी देण्यास सांगितलें. अर्जुनानें पृथ्वींत बाण मारून अमृता-सारखें मधुर आणि सुगंधी अशा पाण्याची धार काढली आणि भीष्म-पितामहांना तृप्त केलें. भीष्मांनीं अर्जुनाची स्तुती केली व दुर्योधनाला सांगितलें कीं, "पाहिलास ना अर्जुनाचा पराक्रम? पाण्डवांना जिंकणें शक्य नाहीं. त्यांच्याशीं वैर करूं नको. त्यांना अर्धें राज्य देऊन आनन्दानें राहा." पण ती गोष्ट दुर्योधनाला पटली नाहीं. मग सर्व मंडळी आपापल्या निवास-स्थानीं (शिबिरांत) गेल्यावर कर्ण भीष्मांच्या भेटीला आला. "तुमच्या डोळ्यांत सलणारा तुमचा वैरी मी कर्ण आलों आहें." असें त्याचें बोलणें ऐकून भीष्मपितामहांनीं डोळे उघडले. मोठ्या प्रेमानें कर्णाला जवळ घेतलें. "सूर्यापासून कुन्तीला झालेला तूं 'कौन्तेय' म्हणजे पाण्डवांचा सख्खा भाऊ आहेस. तूं त्यांच्याशीं स्नेहानें राहा. वैर करूं नको, म्हणजे पुढें युद्ध होणार नाहीं. सर्व राजे आनन्दानें आपापल्या घरीं जातील. कौरव-पाण्डवांचें वैर वाढूं नये, म्हणूनच आजपावेतों मी तुला टाकून बोललों. तुझा पराक्रम मला ठाऊक आहे. पण आतां इथेंच—माझ्या पतनावरच—युद्ध संपू दे" असें भीष्मपितामहांनीं कर्णाला सांगितलें. त्यावर कर्ण म्हणाला, "मी 'कुन्तीचा पुत्र' हें मला माहीत आहे. पण दुर्योधनाचें अन्न खाल्लें आहे. मी त्याचा विश्वास-घात करणार नाहीं." तें ऐकून भीष्म म्हणाले, "जर वैर सोडणें शक्य नसेल तर तूं क्षत्रिय धर्मा-प्रमाणें युद्ध कर. अर्जुनाच्या हातून मरण येऊन तुला सद्गति मिळेल. युद्ध न व्हावें म्हणून मीं शक्य तितके प्रयत्न केले, पण यश आलें नाहीं." भीष्मपितामहांचें तें बोलणें ऐकल्यावर त्यांना नमस्कार करून आणि त्यांची आज्ञा घेऊन कर्ण दुर्योधनाकडे आला.

—: भीष्मपर्वाचा मराठी सारांश समाप्त :—

———

# महाभारतसारांतील ' द्रोणपर्वा 'चा मराठी सारांश

भीष्मपितामहांविषयीं धृतराष्ट्र शोक करीत बसला असतां पंधराव्या दिवशीं रात्रीं सञ्जय त्याच्याकडे आला. धृतराष्ट्रानें भीष्मपतनानंतर काय झालें, असा त्याला प्रश्न केला. तेव्हां सञ्जय म्हणाला, " भीष्म पडल्यावर सर्वांना कर्णाचें स्मरण झालें. इतक्यांत पूर्वी सांगितल्याप्रमाणें कर्ण भीष्मांना भेटून आला. दुर्योधनानें कर्णाला विचारलें, भीष्मांच्या मागून सेनापति कोणाला करावें ? कर्णानें द्रोणाचार्यांचें नांव सांगितल्यावर दुर्योधनानें त्यांना सेनापतिपदाचा अभिषेक केला.

सेनापति झाल्यावर द्रोणाचार्यांनीं पांच दिवस मोठ्या निकरानें युद्ध केलें. एक अक्षौहिणीपेक्षां अधिक वीरांचा नाश केला. पण शेवटीं त्या दुष्ट धृष्टद्युम्नानें त्यांचा वध केला. तें ऐकल्यावर धृतराष्ट्रानें द्रोणाचार्यांच्या मृत्यूनिमित्त पुष्कळ शोक केला आणि युद्धाचा सर्व वृत्तान्त सांगण्याची सञ्जयाला आज्ञा केली. तेव्हां सञ्जय सांगूं लागला.

द्रोणाचार्य सेनापति झाल्यावर त्यांनीं दुर्योधनाला विचारलें कीं, माझ्या हातून कोणती गोष्ट व्हावी अशी तुझी इच्छा आहे तें सांग. दुर्योधन म्हणाला, " गुरुमहाराज, युद्धांत धर्मराजाला तुम्हीं जिवंत धरून आणावें अशी माझी इच्छा आहे." त्याचें कारण काय असें द्रोणाचार्यांनीं विचारल्या-वर दुर्योधनानें आपल्या मनांतील कपटी विचार उघड करून सांगितला. धर्मराजाला मारलें तर भीम, अर्जुन इत्यादि दुसरे आमचा सर्वांचा नाश केल्यावांचून राहणार नाहींत. पण त्याला जिवंत धरून आणलें तर आम्ही पुन्हां द्यूत खेळून त्यांना पूर्वींसारखेंच वनवासाला पाठवूं. त्याच्या मनांतील ती दुष्ट वासना ऐकल्यावर द्रोणाचार्य म्हणाले, " ती गोष्ट मी करीन; पण अर्जुनाला कोणत्यातरी निमित्तानें धर्मराजाचें रक्षण करण्यास सवड मिळतां कामा नये. त्याला दुसरीकडे गुंतवल्यावर मी धर्मराजाला जिवंत धरूं शकेन. पण अर्जुनाच्या समक्ष ही गोष्ट होणें शक्य नाहीं."

( ११ ) तसें बोलणें झाल्यावर दोन्ही सैन्यें समोरासमोर आलीं आणि अकराव्या दिवशीं युद्धाला प्रारंभ झाला. त्या दिवशींच्या युद्धांत द्रोणाचार्यांनीं

पाण्डव-सैन्याचा फार नाश केला आणि आपला रथ धर्मराजाच्या रथाला भिडविला. तें पाहून राजा मेला, धर्मराजा मेला अशा प्रकारचा हाहाःकार पाण्डव-सैन्यानें केला. तो ऐकून अर्जुन तेथें आला आणि त्यानें असा पराक्रम केला, आणि असे बाण सोडले कीं जिकडे तिकडे अंधार पडला. आपला कोण, शत्रू कोण हें कांहींच समजेना. इतक्यांत सूर्यास्त झाल्यामुळें द्रोणाचार्यांनीं युद्ध थांबविलें व दोन्ही सैन्यें आपापल्या निवास-स्थानीं ( शिबिरांत ) गेलीं.

शिबिरांत पोंचल्यावर द्रोणाचार्य दुर्योधनाला म्हणाले, "पहा, आपण सर्वजणांनीं मिळून पुष्कळ खटपट केली, तरी अर्जुन असल्यामुळें आज धर्मराजाला जिवंत धरतां आलें नाहीं. अर्जुनाला जिंकणें अशक्य आहे. म्हणून कोणत्यातरी उपायानें अर्जुनाला दुसरीकडे नेल्यांवाचून हें काम होणार नाहीं." तें ऐकून त्रिगर्तदेशाचा राजा सुशर्मा आणि त्याचे बंधू अर्जुनाबरोबर युद्ध करण्याची शपथ घेऊन सैन्यासुद्धां सिद्ध झाले. अर्जुनाला जिंकूं, नाहींतर आम्ही युद्धांत मरूं अशी शपथ घेऊन निघाल्यामुळें त्यांना 'संशप्तक' असें म्हणतात.

श्रीकृष्णांनीं दुर्योधनाला जें सैन्य दिलें होतें तें 'नारायणगण' या नांवानें प्रसिद्ध होतें. तेंही संशप्तकांबरोबर निघालें. बाराव्या दिवशीं इकडे युद्धाला प्रारंभ होण्याच्या आधींच संशप्तकांनीं अर्जुनाला युद्धासाठीं बोलाविलें. युद्धाला बोलाविल्यावर नाहीं म्हणायचें नाहीं अशी अर्जुनाची प्रतिज्ञा असल्यामुळें धर्मराजाच्या रक्षणाचा भार पाञ्चालराजपुत्र सत्यजित् याच्यावर सोंपवून अर्जुन संशप्तकांशीं युद्ध करण्यास दक्षिण दिशेकडे निघून गेला, आणि तिकडे युद्धांत पुष्कळ संशप्तकांचा आणि नारायणगणांचा त्यानें नाश चालविला.

( १२ ) अर्जुन तिकडे गेल्यावर बाराव्या दिवशीं प्रातःकाळीं पुन्हां युद्धाला आरंभ झाला. द्रोणाचार्यांनीं पाण्डव-सैन्याचा भयंकर संहार करून रक्ताचे पाट वाहविले, आणि त्यांचा रथ धर्मराजाच्या रथाजवळ आला. तेव्हां सत्यजित् त्यांना आडवा होऊन युद्ध करूं लागला, पण द्रोणाचार्यांनीं त्याचा वध केलेला पाहून भीतीनें धर्मराजा पळून गेला. नंतर विराट

राजाचा धाकटा भाऊ शतानीक पुढें आला. त्याचाही नाश द्रोणाचार्यांनीं केल्यावर पाण्डव-सैन्य पळूं लागलें. तें पाहून दुर्योधनाला मोठा आनंद झाला. पण इतक्यांत भीम द्रोणाचार्यांच्या सैन्यावर चालून गेला. तेव्हां भगदत्त राजा हत्तीवर बसून युद्धाला आला. त्यानें आपला हत्ती भीमाच्या रथावर चालविला. त्या हत्तीनें भीमाच्या रथाचें चूर्ण केलें. भीम त्या हत्तीच्या पोटाखालीं जाऊन त्याच्या पोटावर मुष्टिप्रहार करूं लागला, तेव्हां तो हत्ती कुंभाराच्या चाकाप्रमाणें गरगर फिरून भीमाला धरण्याची संधि पाहत होता. परन्तु भीम त्याच्या पोटाखालून निसटला. हत्ती पाण्डव-सैन्याचा नाश करूं लागला. तो कोणालाच आटोपेना. पाण्डव-सैन्य मोठ्यानें ओरडत पळून जाऊं लागलें. त्यांचा शब्द ऐकून भगदत्ताच्या वधाकरितां अर्जुनाचा रथ श्रीकृष्णांनीं फिरविला, पण संशप्तकांनीं युद्धाला हांक मारली म्हणून पुन्हां त्यांच्याशीं युद्ध करून दहा सहस्र [ १०,००० ] त्रिगर्तवीर आणि चार सहस्र [ ४,००० ] नारायणगण यांचा नाश करून अर्जुन भगदत्ताकडे येण्यास निघणार, इतक्यांत पुन्हां सुशर्मा पुष्कळ सैन्य घेऊन युद्धाला आला. तेव्हां सुशर्म्याच्या भावाला ठार मारून व सुशर्म्याला मूर्च्छित करून अर्जुन भगदत्ताकडे आला. अर्जुनानें हत्तीवर आणि भगदत्तावर पुष्कळ बाण सोडले. उलट भगदत्तानें अर्जुनावर वैष्णवास्त्र सोडलें. तें श्रीकृष्णांनीं आपल्या छातीवर झेललें. त्याबरोबर श्रीकृष्णांच्या गळ्यांत वैजयन्ती नांवाची कमळांची माळ होऊन तें अस्त्र शोभूं लागलें. पूर्वीं पृथ्वीनें आपला पुत्र नरकासुर याच्याकरितां तें अस्त्र विष्णूकडून मागून घेतलें होतें. नरकासुराचा वध श्रीकृष्णांनीं केल्यावर तें अस्त्र भगदत्ताला मिळालें. तें वैष्णवास्त्र अजिंक्य असल्यामुळें अर्जुनाला वांचविण्यासाठीं श्रीकृष्णांनीं तें आपल्या छातीवर घेतलें.

नंतर श्रीकृष्ण अर्जुनाला म्हणाले, "भगदत्त फारच म्हातारा झालेला आहे. कपाळावर पडलेल्या वळ्या डोळ्यांवर येऊन दिसत नाहीं, म्हणून यानें कपाळावर पट्टी बांधली आहे." ती सूचना ऐकून अर्जुनानें बाण सोडून ती पट्टी तोडली. त्यामुळें भगदत्ताला कांहीं दिसत नाहींसें झालें. तेव्हां अर्जुनानें बाण मारून हत्तीचा आणि भगदत्ताचा नाश केला. भगदत्ताचा वध

केल्यावर अर्जुन दक्षिणदिशेकडे युद्ध करण्यास गेला. तेव्हां द्रोणाचार्यांनीं पुन्हां पाण्डव-सैन्याचा नाश करण्यास आरंभ केला. तें पाहून नील नांवाचा राजा कौरवांबरोबर युद्ध करण्यास पुढें झाला. त्याचा नाश अश्वत्थाम्यानें केला. तेव्हां पाण्डव-सैन्य पुन्हां पळूं लागलें. अर्जुन येथें असता तर बरें झालें असतें, असा विचार त्यांच्या मनांत आला.

इतक्यांत संशप्तकांचा पराभव करून अर्जुन तेथें आला व द्रोणाचार्यांच्या सैन्याचा नाश करूं लागला. कौरव-सैन्य पळून जात आहे असें पाहून कर्ण युद्धाला पुढें आला. अर्जुनानें त्याच्यावर पुष्कळ बाण मारून त्याचे तीन भाऊ मारून टाकले. भीमानेंही आपल्या गदेनें कर्णाच्या सैन्याचा नाश केला. इतक्यांत सूर्य मावळला, म्हणून युद्ध थांबवून दोन्ही सैन्यें शिबिरांत ( निवासस्थानीं ) गेलीं.

( १३ ) तेराव्या दिवशीं सकाळीं दुर्योधन द्रोणाचार्यांना म्हणाला, "आमचा नाश व्हावा असाच तुमचा विचार दिसतो. धर्मराजाला तुम्हीं काल धरलें नाहींच." द्रोणाचार्य म्हणाले, "तुझ्याकरितां मी शक्य तितकी खटपट करीत असतां तूं असें कां बोलतोस ? आज पहा. पाण्डवांकडील कोणीतरी फार मोठा योद्धा पाडल्यावांचून मी राहणार नाहीं. मात्र अर्जुनाला दूर नेलें पाहिजे." तें ऐकून संशप्तकांनीं अर्जुनाला दक्षिणेकडे युद्धाला बोलाविलें. त्याप्रमाणें तो गेल्यावर द्रोणाचार्यांनीं चक्रव्यूहाची रचना केली. ती (रचना) पाहून धर्मराजाला काय करावें कांहीं सुचेना. त्यानें अभिमन्यूला सांगितलें, "चक्रव्यूहाचा भेद करण्याचें ज्ञान तूं, अर्जुन, श्रीकृष्ण आणि प्रद्युम्न या चौघांना सोडून कोणालाही नाहीं. तेव्हां तूं चक्रव्यूहाचा भेद कर. तूं आंत गेल्यावर त्याच रस्त्यानें तुझ्या मागून आम्ही येऊंच."

चक्रव्यूहाचा भेद करून अभिमन्यू आंत शिरल्यावर भीम इत्यादि पाण्डव अभिमन्यूच्या मागून जाऊं लागले; पण, जयद्रथानें त्यांना अडविलें. पाण्डवांना त्यानें आंत जाऊं दिलें नाहीं. कारण वनपर्वांत सांगितल्या-प्रमाणें शंकरांनीं त्याला वर दिला होता.

अभिमन्यू व्यूहांत शिरल्यावर सर्व सैन्याचा नाश करूं लागला. तें पाहून दुःशासन त्याच्याशीं युद्धाला आला, पण अभिमन्यूच्या बाणानें

केशवपूर्वजः—बलरामः
केसरी—सिंहः
कैटभः—असुरविशेषः
कैवल्यम्—मरणम्, मोक्षः
कोकः—वृकः
कोटिः—१००,००,०००
कोपः—क्रोधः
कोविदः—विद्वान्, कुशलः
कोशः—खड्गपिधानम्
कोष्णम्—मन्दोष्णम्
कौतुकम्—उत्सवः, इच्छा, आश्चर्यम्
कौन्तेयः—कुन्तीपुत्रः
कौमारम्—बालत्वम्
कौरव्यः—कुरुकुलोत्पन्नः
कौलालः—कुम्भकारः
कौशिकः—उलूकः, इन्द्रः, विश्वामित्रः
क्रतुः—यज्ञः, सङ्कल्पः
क्रोडः—वक्षः, सूकरः
क्रव्यादः—मांसभक्षकः
क्रूरः—भयङ्करः
क्रोष्टा—जम्बूकः
क्लिन्नः—आर्द्रः
क्लिष्टा—मर्दिता, पीडिता
क्लीबः—नपुंसकः
क्लेदयन्ति—आर्द्रीकुर्वन्ति
क्लेशः—दुःखम्
क्षणदा—रात्रिः
क्षतजम्—रुधिरम्
क्षत्ता—विदुरः, द्वारपालः, सारथिः
क्षत्रम्—क्षत्रियजातिः
क्षपणम्—क्षयः
क्षमः—समर्थः, योग्यः
क्षमम्—योग्यम्, हितकरम्
क्षमा—पृथिवी
क्षयः—गृहम्, नाशः
क्षरः—नाशवान्
क्षान्तम्—सोढम् ( सह् )
क्षिणोति—पीडयति, नाशयति
क्षितिः—पृथिवी
क्षिप्रम्—झटिति
क्षीणः—नष्टः
क्षुद्रः—अल्पः, नीचः
क्षुण्णः—मर्दितः
क्षुमा—अतसी
क्षुरः—बाणविशेषः
क्षुरः—वपनशस्त्रम्
क्षुरप्रः—बाणविशेषः
क्षेत्रम्—स्थानम्
क्षेपः—निन्दा, अनादरः
क्षेमम्—कल्याणम्
क्षेमः—प्राप्तस्य रक्षणम्
क्षेमिणः—कुशलिनः
क्षेम्या—कल्याणकारिणी
क्षौमम्—दुकूलम्
क्ष्वेडः—गर्जना
खम्—आकाशः

खम्–इन्द्रियम्
खगमः–बाणः, पक्षी
ख्यातः–प्रसिद्धः
ख्यापयामास–कथयामास
गङ्गा–भागीरथी
गङ्गासुतः–भीष्मः
गजः–हस्ती
गजसाह्वयम्–हास्तिनपुरम्
गणः–समुदायः
गतः–प्राप्तः, स्थितः,
गतासुः–मृतः
गतिः–अवस्था, परायणम्
गदः–रोगः
गदः–श्रीकृष्णानुजः
गन्धि–गन्धयुक्तम्
गभस्तिः–किरणः
गरीयः–गुरुतरम्
गरुत्मान्–गरुडः
गर्हणम् (ण।)–निन्दा
गव्यूतिः–क्रोशद्वयम्
गाङ्गः–गङ्गायाः अयम्
गाढम्–अत्यन्तम् पूर्णम्
गाण्डीवम्–अर्जुनधनुः
गाण्डीवधन्वा–अर्जुनः
गात्रम्–शरीरम्, अवयवः
गावल्गाणिः–सञ्जयः
गिरिः–पर्वतः
गीः–वाणी ( गीः, गिरौ, गिरः )

गीर्णम्–ग्रस्तम्
गुणः–रज्जुः
गुप्तः–रक्षितः
गुप्तिः–रक्षणम्
गुरुः–विद्याप्रदाता
गुरुः–महान्, श्रेष्ठः, पिता
गुरुतरः–अतिशयेन गुरुः
गुरुदाराः–माता, गुरुपत्नी
गुर्वी–महती
गुल्मः–स्तम्बः
गुल्मानि–नदीतटानि
गूहनम्–गोपनम्
गूहितुम्–गोप्तुम्
गुह्यम्–गोपनीयम्
गृद्धः–आसक्तः, लुब्धः
गृध्यति–इच्छति
गृहाः–गृहम्
गृह्य–गृहीत्वा
गोकुलम्–गोसमूहः, गोयूथम्
गोचरः–विषयः
गोमुखः–वाद्यविशेषः
गोविन्दः–श्रीकृष्णः
गोप्ता–रक्षकः
गौः–पृथिवी
गौः–इन्द्रियम्
गौः–वृषभः
गौडयासवम्–सुराविशेषः
गौतमः–कृपाचार्यः

गौतमी–कृपी, द्रोणपत्नी
ग्रसिष्णु–ग्रसनशीलम्
ग्रामः–समूहः
ग्रामणीः–अग्रणीः
ग्राहः–निर्बन्धः, आग्रहः, नक्रः
ग्रीवा–कन्धरा
ग्लानिः–ह्रासः
घटमानः–प्रयत्नं कुर्वन्
घटयन्–पीडयन्
घटे–यत्नं करोमि
घट्टितः–मर्दितः
घनः–मेघः, निबिडः
घातः–नाशः
घातकः–मारयिता
घातितः–मारितः
घूर्णः–सर्वतः भ्रमन्
घोणा–नासिका
घोरा–भयदा
घोषः–रवः, निनादः
घ्राणचक्षुः–अन्धः
चक्राङ्गः–मानसचारी, हंसः
चक्षुः–नेत्रम्
चक्षुर्हणः–दृष्टिमात्रेण हन्ता
चतुराश्रमाः–ब्रह्मचर्यगार्हस्थ्यवान-
प्रस्थसन्यासाः
चतुर्दश–१४
चतुर्विधम्–चतुःप्रकारम्
चतुर्विधमन्नम्–भक्ष्यम्, भोज्यम्,
लेह्यम्, चोष्टम्

चतुर्वेदाः–ऋक्, यजुः, साम, अथर्वणः
चत्वारो वर्णाः–ब्राह्मणक्षत्रियवैश्यशूद्राः
चमूः–सेना, सैन्यम्
चयः–समूहः
चरन्–गच्छन्
चर्म–फलकः
चातुर्वर्ण्यम्–चतुर्णां वर्णानां हितम्
चातुर्वर्ण्यम्–चत्वारो वर्णाः
चापम्–धनुः
चारः–गुप्तदूतः
चाषः–पक्षिविशेषः, किकीदिविः
चिक्रीड–क्रीडाञ्चकार
चिखादिषुः–खादितुमिच्छुः
चितः–व्याप्तः
चित्रसेनः–कर्णपुत्रनाम
चिन्तयन्–विचारयन्
चिन्तयानः–विचारयन्
चिन्तये–विचारये
चूतः–आम्रवृक्षः
चेकितानः–पाण्डवपक्षीयो यादवः
चेतः–मनः
चेतनम्–मनः
चैलम्–वस्त्रम्
चोदितः–प्रेरितः
च्युतः–निःसृतः, भ्रष्टः
छद्म–कपटम्
छन्दः–इच्छा
छन्दः–वेदः, मन्त्रः

छन्दयामास–तोषयामास
छादये–आच्छादयामि
छिद्रम्–न्यूनम्
जगती–पृथ्वी
जगर्हे–निन्दां कृतवान्
जग्धम्–भक्षितम्
जघनम्–पश्चाद्भागः
जघनम्–स्त्रीकट्याः पुरोभागः
जघन्यम्–अन्त्यम्, निन्द्यम्
जडः–मूर्खः
जतुगृहम्–लाक्षागृहम्
जत्रुदेशः–स्कन्धसन्धिभागः
जनपदः–देशः
जनार्दनः–श्रीकृष्णः
जनिता–निर्मिता, जनकः
जन्तुः–प्राणी
जयः–महाभारतम्
जयः–अर्जुनः
जयगृद्धः–जयासक्तः, जयैषी
जरा–वृद्धत्वम्
जलदः–मेघः
जलेश्वरः–वरुणः
जवः–वेगः
जवनः–वेगवान्
जहाति–त्यजति
जहौ–तत्याज
जह्याम्–त्यजेयम्
जाटासुरिः–जटासुरपुत्रः
जातः–उत्पन्नः
जातम्–जन्म
जातरूपम्–सुवर्णम्
जातिः–जन्म
जातु–कदाचित्
जानपदिकम्–सर्वजनसाधारणम्
जानु–जङ्घोरुसन्धिः, ऊरुपर्व
जामाता–कन्यापतिः
जाम्बूनदम्–सुवर्णम्
जालम्–समूहः
जाह्नवी–भागीरथी
जाह्नवीसुतः–भीष्मः
जिगाय–अजयत्
जिगीषन्–जेतुमिच्छुः
जिघांसा–हन्तुमिच्छा
जिघृक्षा–ग्रहीतुमिच्छा
जिजीविषा–जीवितुमिच्छा
जिज्ञासुः–ज्ञातुमिच्छुः
जिह्मः–कुटिलः
जिह्मम्–कपटम्
जीमूतः–जलदः
जीर्णः–वृद्धः
जीवग्राहम्–जीवन्तम्
जीविका–जीवनम्
जीवितम्–जीवनम्, प्राणाः
जुहूषन्–होतुमिच्छन्, त्यजन्
जोषमास्व–तूष्णीं भव, तिष्ठ
जोषयेत्–कारयेत्, सेवयेत्

ज्ञातिः–बान्धवः
ज्ञानम्–सम्बन्धः
ज्या–धनुर्गुणः, मौर्वी
ज्यायस्–श्रेष्ठम्, उत्तमम्, ज्येष्ठम्
ज्वरः–दुःखम्
ज्वालामाली–अग्निः
झषः–मत्स्यः
ततः–तदनन्तरम्
ततम्–व्याप्तम्
ततक्ष–आच्छादयामास
तत्त्वम्–यथार्थत्वम्, स्वरूपम्
तथागतः–तादृशीं अवस्थां प्राप्तः
तथ्यम्–यथार्थम्, सत्यम्
तनयः–पुत्रः
तनुः–शरीरम्, कृशः
तन्द्रा–आलस्यम्
तन्द्रितः–आलस्ययुक्तः
तपःक्षेत्रम्–धर्मक्षेत्रम्
तपन्–पराक्रमी
तपनीयम्–सुवर्णम्
तपस्–धर्मः
तमः–अन्धकारः, मोहः
तरङ्गः–वीचिः
तरङ्गिणी–नदी
तरसा–वेगेन
तरस्वी–वेगवान्
तरुः–वृक्षः
तर्ज्यमानः–निन्द्यमानः
तल्पम्–शय्या, दाराः, पत्नी
तस्करः–चौरः
तापः–दुःखम्
तापनः–पीडकः
तापनीयम्–सुवर्णमयम्
तारा–नक्षत्रम्
तारापतिः–चन्द्रः
तालध्वजः–बलरामः
तावकः–त्वत्सम्बन्धी
तावकी–तव सम्बन्धिनी
तिग्मम्–तीक्ष्णम्
तिग्मांशुः–सूर्यः
तिग्मतेजाः–सूर्यः
तितिक्षस्व–सहस्व
तिमिः–महामत्स्यः
तीरजः–तीरे भवः
तुद्यमानः–पीड्यमानः
तुद्यमानः–भर्त्स्यमानः
तुमुलम्–युद्धम्, सङ्कुलम्
तुरगः–अश्वः
तुरङ्गः–अश्वः
तुरङ्गमः–अश्वः
तुषारः–हिमम्, अम्बुकणाः
तूणः–इषुधिः
तूणीरः–इषुधिः
तूबरकः–षण्ढः
तूर्णम्–सत्वरम्
तूर्यम्–वाद्यम्

तूलम्–कार्पासम्
तूष्णीम्–मौनम्
तोत्रम्–अङ्कुशः, तत्सदृशं शस्त्रं वा
तोयम्–वारि
तोयरसः–अमृतम्
त्मानम्–आत्मानम्
त्याज्यः–त्यक्तुं योग्यः
त्रपा–लज्जा
त्रयी–ऋग्यजुःसामवेदाः
त्रयोदश–१३
त्राणम्–रक्षणम्
त्रासः–भीतिः, भयम्
त्रिंशत्–३०
त्रिगुणाः–सत्त्वम्, रजः, तमः
त्रितयम्–त्रयाणां समूहः
त्रिदशः–देवः
त्रिलोकाः–स्वर्गः, मृत्युः, पातालम्
त्रिशतम्–३००
त्रैयम्बकम्–त्र्यम्बकस्य इदम्
त्र्यम्बकः–शिवः
त्वरमाणः–त्वरां कुर्वाणः
त्वष्टा–शिल्पी (विश्वकर्मा)
त्सरुः–खड्गमुष्टिः
दंशनम्–कवचम्
दंशितः–वर्मसहितः
दक्षः–निपुणः, सावधानः
ददार–बिभेद
दधार–वारयामास, धारयामास
दन्ती–गजः
दम्भः–कपटम्, धर्मध्वजित्वम्
दयितः–प्रियः
दर्दुरः–मण्डूकः
दर्पः–गर्वः, अभिमानः
दर्वी–परिवर्तकः
दर्शनीयः–मनोहरः
दर्शयिता–उपदेष्टा
दश–१०
दशनः–दन्तः
दशायुतानि–१००००००
दाक्षिणात्याः–दक्षिणदिग्भवाः
दाक्षिण्यम्–चातुर्यम्, कौशलम्
दाक्ष्यम्–दक्षता, बलम्
दानम्–दीयते तत् दानम्
दान्तः–इन्द्रियनिग्रही
दान्तः–मनोनिग्रही
दायादः–पुत्रः
दारणी–भेदिनी
दारयति–भेदयति
दारयति–भीतिं जनयति
दाराः–स्त्री, पत्नी
दारु–काष्ठम्
दारुणः–कठोरः
दारुणम्–भयङ्करम्
दावः–अरण्यम्
दाशार्हः–श्रीकृष्णः
दासः–भृत्यः

दिक्–दिशा
दिग्धः–लिप्तः, व्याप्तः
दित्ससि–दातुमिच्छसि
दिदृक्षुः–द्रष्टुमिच्छुः
दिधक्षन्–दग्धुमिच्छन्
दिधक्षुः–दग्धुमिच्छुः
दिनम्–दिवसः
दिव्–आकाशः, स्वर्गः
दिवाकरः–रविः
दिव्यम्–अलौकिकम्, अप्राकृतम्
दिव्यम्–दिवि भवम्
दिष्टम्–दैवेन प्राप्तम्, दैवम्
दिष्टम्–उपदिष्टम्
दिष्टान्तः–मरणम्, मृत्युः
दिष्टिः–दैवम्
दिष्ट्या–आनन्दार्थकमव्ययम्
दीनः–दुःखी
दीप्तः–उग्रः
दीप्तिः–तेजः, सौन्दर्यम्
दीर्णः–भीतः, भिन्नः, भग्नः
दीर्यते–भिद्यते
दुनोति–दुःखं जनयति
दुरत्ययः–दुर्जयः, अनुल्लङ्घ्यः
दुरोदरम्–द्यूतम्
दुर्धर्षः–जेतुमशक्यः
दुर्मेधाः–मूढः
दुर्विदः–दुर्ज्ञेयः
दुश्चरितम्–दुराचरणम्, पातकम्



दुष्कृत्–पापी
दुष्कृतम्–दुराचरणम्, पातकम्
दुष्कृती–पापी
दुष्प्रेक्ष्यः–दुःखेन प्रेक्षितुं शक्यः
दुहिता–कन्या
दृढलक्ष्यः–स्थिरप्रहारः
दृप्तः–बलिष्ठः, गर्विष्ठः
दृष्ट्वा–निश्चित्य, वीक्ष्य
देवकी–श्रीकृष्णस्य माता
देवव्रतः–भीष्मः
देविता–द्यूतकर्ता
देशय–कथय, दर्शय
देशय–शिक्षय
देहान्तरम्–अन्यो देहः
देही–देहवान्, आत्मा
दैवी–देवस्य इयम्
दोस्–हस्तः
दौःशासनिः–दुःशासनपुत्रः
दौर्योधनम्–दुर्योधनस्य सम्बन्धि
द्युतिः–कान्तिः
द्यौः–आकाशः
द्रवणम्–गमनम्, पलायनम्, धावनम्
द्रविणम्–धनम्
द्रव्यम्–धनम्
द्रुमः–वृक्षः
द्रौणायनिः–द्रोणपुत्रः ( अश्वत्थामा )
द्रौणिः–द्रोणपुत्रः ( अश्वत्थामा )
द्रौपदेयाः–द्रुपदपुत्राः

द्रौपदेयाः—द्रौपदीपुत्राः
द्वादश—१२
द्विः—द्विवारम्
द्विगुणम्—अधिकम्
द्विजाः—ब्राह्मणक्षत्रियवैश्याः
द्विजोत्तमः—ब्राह्मणः
द्विट्—शत्रुः
द्विपः—गजः
द्विपाद्—मनुष्यः
द्विरदः—गजः
द्वीपम्—आश्रयः
द्वेषी—द्वेष्टा, विरोधी
द्वैधम्—संशयः
द्वैपक्ष्यम्—पक्षद्वयम्
द्वैपायनः—व्यासः
धक्ष्यामहे—भस्मीभवेम
धनञ्जयः—अर्जुनः
धनुष्मान्—धनुर्धारी
धन्वन्तरम्—हस्तचतुष्टयम्
धन्वी—धनुर्धारी
धरणी—वसुमती, पृथिवी
धरा—वसुधा, पृथिवी
धर्मक्षेत्रम्—धर्मस्थानम्
धर्म्यः—धर्मादनपेतः
धाता—प्रजापतिः, ब्रह्मा
धात्री—माता, उपमाता
धानाः—भ्रष्टयवाः
धारय—आश्वासय
धार्तराष्ट्रः—धृतराष्ट्रपुत्रः ( दुर्योधनः )
धार्तराष्ट्री—धृतराष्ट्रस्य सम्बन्धिनी
धिष्ठितम्—स्थितम्
धीः—बुद्धिः
धीमान्—बुद्धिमान्
धुर्यः—श्रेष्ठः
धुर्याः—अश्वाः
धुर्यगतः—अश्वः
धूः—स्कन्धः, धुरा
धूमकेतुः—अग्निः
धृतः—दृढनिश्चयी
धृतराष्ट्रजः—दुर्योधनः
धृतिः—धैर्यम्
धृष्टकेतुः—शिशुपालपुत्रः
धौम्यः—पाण्डवपुरोहितः
ध्यानम्—चिन्ता
ध्रुवः—स्थिरः, निश्चितः
ध्रियमाणः—जीवन्
ध्वजिनी—सेना
न इङ्गते—न चलति
नक्षत्रमभितः—नक्षत्रं लक्षीकृत्य
नन्दनः—पुत्रः
नन्दनम्—इन्द्रस्य उद्यानम्
नयः—नीतिः
नरकः—भूमिपुत्रः
नरेन्द्रः—राजा
नर्दन्—शब्दं कुर्वन्
नर्दयन्—शब्दं कारयन्

नलिनम्—कमलम्
नवतिः—९०
नवद्वाराणि—चक्षुःश्रोत्रनासाबिल-
द्वन्द्वानि, मुखम्, उपस्थम्, पायुः
नष्टः—अदर्शनं गतः, पलायितः
नागः—गजः, सर्पः
नागपतिः—शेषः
नागा—सर्पस्त्री
नाथः—स्वामी, पतिः
नाना—बहूनि
नाम—प्रसिद्धम्
नामयज्ञः—नाममात्रयज्ञः
नायकः—स्वामी, नेता
नाराचः—शरः
नारी—स्त्री, ललना
नासा—नासिका
निकारः—कपटम्, अपकारः
निकारः—अपमानः
निकाशः—सदृशः
निकृतिः—कपटम्
निकृन्ततु—छिनत्तु
निकेतः—गृहम्, वसतिस्थानम्
निकेतनम्—गृहम्
निक्षिप्तम्—त्यक्तम्
निग्रहः—ग्रहणम्
निग्रहः—निरोधः
नित्यदा—सततम्
निदर्शनम्—दृष्टान्तः, उदाहरणम्
निदाघः—ग्रीष्मर्तुः
निदेशः—आज्ञा
निमित्तम्—लक्ष्यम्, कारणम्
निधनम्—मृत्युः
निधनम्—निधनहेतुः
निनादः—शब्दः
निन्द्यम्—गर्हणीयम्
निबर्हणः—मारकः
निबोध—जानीहि, बुध्यस्व
निम्नम्—गभीरम्
निम्नगा—नदी
निम्नगासुतः—गङ्गापुत्रः ( भीष्मः )
नियच्छमानः—नियन्ता
नियतम्—निश्चितम्, नियमेन
नियन्ता—सारथिः
नियोगः—आज्ञा
निरपत्रपः—निर्लज्जः
निरयः—नरकः
निरस्तः—हतः, निवारितः
निर्मुक्तः—मुक्तकञ्चुकः
निर्वाणम्—गमनरहितम्
निर्वेदः—वैराग्यम्, विरक्तता
निवर्तितुम्—निवर्तयितुम्
निवातम्—वायुरहितस्थानम्
निवृत्तिः—निषेधवाक्यम्, निवर्तनम्
निवेशः—शिबिरम्
निवेशः—स्थानम्
निवेशनम्—गृहम्, स्थानम्

निवेशय–स्थापय
निशम्य–श्रुत्वा
निःशेषम्–सम्पूर्णम्
निषूदनः–नाशकः
निष्पतन्ति–निर्गच्छन्ति
निःस्वनः–शब्दः
निशा–रात्रिः
निशाकरः–चन्द्रः
निशाचरः–राक्षसः
निशामय–पश्य
निशाम्य–आलोच्य
निशीथः–अर्धरात्रः
निषङ्गः–तूणीरम्
निषेद्धा–निवारयिता
निष्क्रान्तः–निर्गतः
निष्टनः–आक्रोशः
निष्ठा–अवस्था, नाशः
निस्त्रिंशः–खड्गः
निहतः–मृतः
निहत्य–मारयित्वा
नीडम्–रथमध्यः, पक्षिगृहम्
नीरम्–जलम्
नीरदः–मेघः
नीलवासाः–बलरामः
नीवी–वसनग्रन्थिः ( स्त्रीणाम् )
नीहारः–हिमम्
नुन्नः–नाशितः, उत्पातितः
नृशंसः–दुष्टः, घातकः क्रूरः

नेता–कर्णधारः
नेमिः–चक्रस्य भूमिस्पर्शी भागः, प्रधिः
नैकृतिकः–वञ्चकः
नैराश्यम्–निराशत्वम्
नैश्रेयसी–अभ्युदयदायिनी
नैष्कर्म्यम्–निष्कर्मता, मोक्षः
नैष्कृतिकः–दुष्टः, दुराचारी
नैष्ठिकी–निश्चिता
नैष्ठिकी–सात्त्विकी
नोदय–प्रेरय
नोदिता–प्रेरिता
नौः–नौका
न्यग्रोधः–वटवृक्षः
न्यस्तम्–त्यक्तम्
न्याय्यः–न्यायादनपेतः
पक्वः–पूर्णत्वं प्राप्तः
पञ्च–५
पञ्चकर्मेन्द्रियाणि–वाक्, पाणिः, पादः, पायुः, उपस्थम्
पञ्चज्ञानेन्द्रियाणि–श्रोत्रं, त्वक्, चक्षुः जिह्वा, घ्राणम्
पञ्चप्राणाः–प्राणः, अपानः, व्यानः उदानः, समानः
पञ्चपातकानि–

ब्रह्महत्या, सुरापानं,
स्तेयं, गुर्वङ्गनागमः ।
चत्वारि पातकान्याहु-
स्तत्संसर्गश्च पंचमम् ॥

पञ्चभूतानि–भूमिः, जलम्, अग्निः, वायुः, आकाशः

पञ्चविषयाः–शब्दस्पर्शरूपरसगन्धाः
पञ्चशाखः–पाणिः, हस्तः
पञ्चाशत्–५०
पणवः–वाद्यभेदः
पतगः–पक्षी
पतगेश्वरः–गरुडः
पतङ्गः–पक्षी
पतत्रिन्–पक्षी
पतिः–स्वामी, पालकः
पत्तिः–पदातिः
पत्रम्–वाहनम्, पर्णम्
पथ्यम्–हितकरम्
पदम्–रक्षणम्, स्थानम्
पदवी–आनृण्यम्, मार्गः
पदातिः–पादचारी
पदानुगः–अनुयायी
परःशताः–शताधिकाः
परम्–बहुकालिकम्
परः–श्रेष्ठः, शत्रुः, अन्यः
परः–मोक्षः
परन्तपः–शत्रुमर्दनः
परमम्–श्रेष्ठम्
परमवल्गु–अतिमधुरम्
परमा–श्रेष्ठा, अत्यन्ता
परमा गतिः–मोक्षः, मुक्तिः
परवान्–पराधीनः
परश्वधः–परशुः, कुठारः
परस्परम्–अन्योन्यम्
पराभवः–नाशः
पराभावः–मरणम्
पराभूतः–प्रकोपितः
परामर्शः–बलात्कारः, सङ्गः
परामर्शः–स्पर्शः
परामृशत्–अस्पृशत्
परायणः–तत्परः, रतः
परासुः–मृतः, गतप्राणः
परिक्लिष्टा–पीडिता
परिखा–खेयम्
परिग्रहः–विजयः, लाभः
परिच्छदः–आवरणम्, (वर्म) परिवारः
परितप्यसे–खिद्यसे
परित्यागः–राज्यस्य अदानेन तिरस्कारः
परित्राणम्–रक्षणम्
परिदेवना–शोकः
परिद्यूनः–परिश्रान्तः
परिपन्थी–शत्रुः, विरोधी, चौरः
परिपालय–प्रतिपालय, प्रतीक्षस्व
परिप्लुतम्–व्याप्तम्
परिभूय–पराभवं प्राप्य
परिमार्गन्–शोधयन्
परिवव्रुः–परिवेष्टितवन्तः
परिवारितः–वेष्टितः
परिवेषः–परिधिः
परिव्राट्–संन्यासी
परिष्कृतम्–अलङ्कृतम्

परिष्वज्य–आलिङ्ग्य
परीतः–व्याप्तः, विपरीतः
परीप्सन्–रक्षितुं इच्छुः
परुषम्–निष्ठुरम्
परेण–अतिशयेन
परोक्षम्–असमक्षम्
परोक्षम्–अज्ञातम्
पर्णम्–पत्रम्, पतगम्
पर्यणामयन्–परिणीतवन्तः
पर्यवतिष्ठते–स्थिरीभवति
पर्यष्वजत–आलिङ्गितवान्
पर्याप्तम्–प्राप्तम्, अलम्
पर्युषितम्–रात्र्यन्तरितम्, पूर्वदिने पक्कम्
पलाशम्–पत्रम्
पलितम्–श्वेतकेशाः
पांसनः–अधमः
पांसवः–धूलिकणाः
पाकशासनः–इन्द्रः
पाकशासनिः–इन्द्रपुत्रः (अर्जुनः + जयन्तः)
पाचितः–संयुक्तः
पाणिः–हस्तः
पाण्डवेयाः–पाण्डवपक्षीयाः, पाण्डुपुत्राः
पातनम्–नाशः
पाति–रक्षति
पादपः–वृक्षः
पादातः–पादचारी
पादाष्ठीलः–पादग्रन्थिः
पादाष्ठीलः–जानु
पानीयम्–जलम्
पापः–निन्द्यः
पायुः–गुदद्वारम्
पारम्–परतीरम्, अन्तः (म्)
पारणीयः–निवारयितुं शक्यः
पारणीयम्–तरणीयम्
पाराशर्यः–व्यासः
पारुष्यम्–निष्ठुरभाषणम्
पार्थः–पृथापुत्रः (धर्मः + भीमः + अर्जुनः)
पार्थिवः–राजा
पार्षतः–धृष्टद्युम्नः
पावकः–अग्निः
पावकिः–अग्निपुत्रः (स्कन्दः)
पावनम्–पवित्रम्, पवित्रकरम्
पावयिष्यति–पावनं करिष्यति
पाहि–पालय, रक्ष
पितामहः–ब्रह्मा
पितामहः–पितुः पिता
पित्र्यम्–पितुः इदम्
पिनाकः–शिवधनुः
पिनाकी–शङ्करः
पिपासा–पातुमिच्छा, तृष्णा
पिहितम्–आच्छादितम्
पीड्य–गृहीत्वा
पीड्य–पीडयित्वा
पीनः–पुष्टः
पीलुः–अक्षोटवृक्षः
पुङ्खः–शरस्य मूलम्

पुङ्गवः–श्रेष्ठः
पुच्छम्–लाङ्गूलम्
पुण्यः–पवित्रः, शुभः
पुमान्–पुरुषः
पुरतः–अग्रतः
पुरम्–शरीरम्, नगरम्
पुरन्दरः–इन्द्रः
पुराकल्पः–पूर्वकल्पः, पूर्वकृतः
पुराकल्पः–प्राचीनशास्त्रम्
पुरातनम्–पुराणम्
पुरुजित्–कुन्त्याः भ्राता, कुन्तिभोज–पुत्रः
पुरुषः–जीवः, मानवः, परमात्मा
पुरुषकारः–प्रयत्नः, उद्योगः
पूर्वाह्णः–सूर्योदयात् दशघटिका–पर्यन्तो दिनभागः
पुरुषोत्तमः–श्रीकृष्णः, विष्णुः
पुरोधाः–पुरोहितः
पुष्करम्–कमलम्
पुष्पसमयः–वसन्तः ( वसन्तर्तुः )
पुष्पितः–विकसितः, पुष्पयुक्तः
पूगः–समूहः
पूतम्–पवित्रम्
पूति–दुर्गन्धि
पूर्वजः–ज्येष्ठः, पूर्वं जातः
पूर्वासन्ध्या–प्रातःकालः
पृतना–सेना
पृथग्जनः–मूर्खः, सामान्यजनः
पृथग्भावः–नानात्वम्
पृथुलम्–विस्तृतम्
पृथा–कुन्ती
पृथु–विस्तृतम्
पृथ्वी–भूमिः
पृथ्वीशः–राजा
पृषती–चित्रहरिणी
पृषत्कः–बाणः
पैशुन्यम्–दुष्टत्वम्
पोतः–नौका
पोथयामास–आस्फालितवान्
पौरुषम्–पुरुषत्वम्, पराक्रमः
प्रकाशः–सदृशः
प्रकृतिः–उपादानम्
प्रकृतिः–स्वभावः
प्रकृतिः–माया
प्रख्यः–तुल्यः, सदृशः
प्रख्या–सादृश्यम्, शोभा
प्रच्यावयामास–पातयामास
प्रजा–लोकः
प्रजापतिः–दक्षादिः, ब्रह्मा, राजा
प्रज्ञा–बुद्धिः
प्रज्ञाचक्षुः–धृतराष्ट्रः (अन्धः)
प्रणयः–स्नेहः
प्रणवः–ओँकारः
प्रणश्य–निलीनो भूत्वा
प्रणुन्नः–विप्रकृतः
प्रणेता–नायकः

प्रतापः—पराक्रमः
प्रतारणम्—वञ्चनम्
प्रतिकर्तव्यम्—प्रतिकारः
प्रतिग्रहः—आदानम्
प्रतिग्रहः—दानग्रहणम्
प्रतिपत्तिः—प्रतीकारः, उपायः
प्रतिपाल्य—प्रतीक्षस्व
प्रतिमा—मूर्तिः
प्रतिलभ्य—प्राप्य
प्रतिवारणम्—निवारणम्
प्रतिविन्ध्यः—युधिष्ठिरपुत्रः
प्रतिशब्दः—प्रतिध्वनिः
प्रतिष्ठा—आश्रयः
प्रतिश्रुतम्—प्रतिज्ञातम्
प्रतिष्ठितः—अधीनः
प्रतीच्याः—पाश्चात्याः, पश्चिमदिग्भवाः
प्रतीपः—विरुद्धः
प्रत्यनीकम्—शत्रुसैन्यम्
प्रतोदः—अभीषुः, कशा
प्रत्यग्रवयाः—नवयौवनः, तारुण्ययुक्तः
प्रत्यपद्यत—प्रविष्टः, प्राप्तः
प्रत्यभात्—प्रादुर्भूतः
प्रत्ययः—विश्वासः, अनुभवः
प्रत्यरिः—प्रतिकूलः शत्रुः
प्रत्यवायः—दोषः, हानिः
प्रत्याश्वस्तः—लब्धसंज्ञः
प्रत्युद्याति—प्रत्युद्गच्छति
प्रथयिष्यामि—वर्धयिष्यामि
प्रथितः—प्रसिद्धः
प्रदिशाः—उपदिशः
प्रदुद्रुवुः—पलायिताः
प्रधक्ष्यति—भस्मीकरिष्यति
प्रपन्नः—शरणागतः, प्राप्तः
प्रपातः—पर्वताग्राद्भ्रंशः
प्रपातः—पतनम्
प्रपितामहः—पितामहस्य पिता
प्रपीड्य—दृढं धृत्वा
प्रभविष्णु—उत्पादनशीलम्
प्रभा—कान्तिः
प्रभिन्नः—मदयुक्तः (गजः)
प्रभुः—ईश्वरः
प्रमत्तः—चिन्तारहितः
प्रमनस्तरः—प्रसन्नतरमानसः
प्रमनाः—प्रकृष्टमनाः
प्रमादः—चित्तविक्षेपः, अनवधानम्
प्रमादी—स्खलनशीलः
प्रमृज्य—दूरीकृत्य, नाशयित्वा
प्रमेयः—ज्ञातुं योग्यः
प्रमोहः—मूर्च्छा, लयः
प्रलम्बहा—प्रलम्बासुरहन्ता, बलरामः
प्रयच्छ—देहि
प्रयाणम्—गमनम्, मरणम्
प्रयाणकालः—मरणसमयः
प्रयुक्तः—प्रवर्तितः
प्रयोजनम्—साध्यम्, कारणम्

प्रयोजिता–निर्मिता
प्रलयः–मरणम्, नाशः
प्रवरः–श्रेष्ठः
प्रववृते–आरब्धम्, प्रवृत्तम्
प्रवालम्–किसलयम्
प्रवृत्तिः–चेष्टा, व्यवहारः
प्रवृत्तिः–वार्ता
प्रवृत्तिः–विधिवाक्यम्, प्रवर्तनम्
प्रवेकः–उत्कृष्टः, मुख्यः
प्रशंसति–कामयते
प्रशंसन्ति–स्तुवन्ति
प्रशस्तम्–स्तुत्यम्, शुभम्, श्रेष्ठम्
प्रशान्तः–मृतः
प्रसभम्–बलात्कारेण
प्रसह्य–अनादृत्य
प्रसादः–प्रसन्नता, स्वच्छता
प्रसृतः–वृद्धिं प्राप्तः, विस्तृतः
प्रस्खलितान्तरः–मध्ये स्खलन्
प्रहर्षः–अत्यानन्दः
प्रहृष्टः–आनन्दितः
प्रांशुः–उच्चः
प्राग्ज्योतिषः–भगदत्तः
प्राच्याः–पौरस्त्याः, पूर्वदिग्भवाः
प्रायगतः–प्रायोपविष्टः
प्राणः–शारीरं बलम्
प्राणः–जीवः
प्राध्यायन्त–ध्यानं कृतवन्तः
प्राप्तकालम्–सद्यः कर्तव्यम्

प्रायः–आमरणमन्नत्यागः
प्रायः–प्रायेण
प्रायगतः–मरणाय उपविष्टः
प्रायशः–बहुशः
प्रायेण–बहुधा
प्रावृट्–वर्षाकालः
प्रासः–कुन्तः
प्राहिणोत्–प्रेषयामास
प्रीतमानसः–सन्तुष्टमनाः
प्रीतिमान्–प्रीतियुक्तः
प्रेक्षणीयम्–दर्शनीयम्
प्रेतः–मृतः
प्रेतकार्याणि–और्ध्वदेहिकम्
प्रेतराजः–यमः
प्रेप्सुः–इच्छुः
प्रेष्यः–सेवकः
प्रोत्सारितम्–दूरमपसारितम्
प्लवः–नौका
प्लवङ्गमः–वानरः
फलिष्यति–भिन्नो भविष्यति
फलापगः–फलोन्मुखः
फल्गुः–निःसत्त्वः, दुर्बलः
फाल्गुनः–अर्जुनः
फाल्गुनिः–अर्जुनपुत्रः ( अभिमन्युः )
बन्धकी–वेश्या, वारललना
बर्हम्–पिच्छम्
बर्ही–मयूरः
बलम्–सैन्यम्

बलाभिद्–इन्द्रः
बलाहकः–मेघः
बस्तिकः–बाणविशेषः
बहुलम्–बहु
बहुशः–अनेकवारम्
बाढम्–आम्, साधु, बहु
बाणभेदाः–
कपिशः–काष्र्णायसमयः
कर्णी–विलोमकण्टकद्वययुक्तो बाणः
गजास्थिजः–गजास्थिनिर्मितः
गवास्थिजः–गवास्थिनिर्मितः
जिह्मगः–लक्ष्यान्तरगामी
नालीकः–अल्पप्रमाणः
पूतिः–मालिनशल्यः
बास्तिकः–शल्यदण्डसन्धौ शिथिलः
लिप्तः–विषयुक्तः
संलिष्टः–द्विशल्यः
सूची–कर्णिसजातीयो बहुकण्टकः
बान्धवः–आप्तः, ज्ञातिः
बालः–लघुः, अज्ञः, कुमारः
बालिशः–मूर्खः
बाष्पम्–अश्रु, नेत्रजलम्
बाहुः–हस्तः
बाहुल्यम्–बहुत्वम्, सङ्ख्याधिक्यम्
बिभर्ति–धारयति
बीभत्सुः–अर्जुनः
बुद्धिजम्–बुद्धेरुत्पन्नम्
बुद्धिभेदः–बुद्धेश्चालनम्
बुधः–पण्डितः
बुभूषति–भवितुमिच्छति
बुभूषेत्–भोक्तुमिच्छेत्
बृंहितम्–गजगर्जना
बृंहितः–वृद्धः
बृहती–महती
बोधः–ज्ञानम्
ब्रवीत्–अब्रवीत्
ब्रह्म–ब्राह्मणजातिः
ब्रह्म–वेदः, परमात्मा, माया
ब्रह्मभूयाय–ब्रह्मभावाय
ब्रह्मवादी–वैदिकः
भजते–प्राप्नोति, सेवते
भद्रम्–कल्याणम्
भद्रकाली–कल्याणकारिणी
भयानकम्–भीतिप्रदम्
भरताः–भरतवंशीयाः राजानः
भल्लः–बाणः
भवः–उत्पत्तिः
भवनम्–गृहम्
भषेत्–भषणं कुर्यात्
भाः–दीप्तिः, तेजः
भागधेयम्–भाग्यम्, दैवम्
भागिनेयः–भगिनीपुत्रः
भाजनम्–भाण्डम्, स्थानम्
भामिनी–स्त्री, ललना
भारताचार्यः–द्रोणाचार्यः
भारती–कौरवसेना

भारती–वाणी
भारद्वाजः–भरद्वाजकुलोत्पन्नः ( अश्वत्थामा )
भावः–इष्टसिद्धिः
भावः–सत्ता, अभिप्रायः, मनः
भावना–ध्यानम्
भावयन्तु–तर्पयन्तु
भाषा–भाषणम्, वचनम्
भाषितम्–भाषणम्
भास्करः–सूर्यः
भास्वरम्–तेजस्वि
भीः–भयम्
भीमम्–भयङ्करम्
भीष्मनिहन्ता–शिखण्डी
भुजः–बाहुः
भुजगः–सर्पः
भुजङ्गः–सर्पः
भुजङ्गमः–सर्पः
भुवनम्–लोकः ( ब्रह्मभुवनम् )
भूः–पृथिवी
भूपः–राजा
भूमिः–पृथिवी
भूमिपः–राजा
भूयः–पुनः, बहु
भूयसी–महती
भूयिष्ठः–बहुः
भूरि–बहु
भूरिदक्षिणः–भूरिश्रवाः
भृतः–पोषितः
भृशम्–अत्यन्तम्
भेदः–विनाशः, अन्तरम्
भेरी–दुन्दुभिः
भैक्ष(क्ष्य)म्–भिक्षान्नम्
भैरवः–भयदः
भैमसेनिः–भीमसेनपुत्रः, घटोत्कचः
भैमिः–भीमसेनपुत्रः, घटोत्कचः
भैषज्यम्–औषधम्
भोगः–सम्भोगः, सर्पशरीरम्
भोगी–पन्नगः
भोजः–कृतवर्मा
भोजाः–यादवभेदाः
भौमम्–भूमिसंबन्धि
भ्रमन्–भ्रमणं कुर्वन्, घूर्णन् (मानः)
भ्रमरः–भृङ्गः, षट्पदः
भ्राजिष्णु–तेजस्वि
भ्रातृव्यः–भ्रातृपुत्रः, शत्रुः
मकरालयः–समुद्रः
मघवा–इन्द्रः
मङ्गलम्–कल्याणम्
मज्जन्–ब्रुडन्
मण्डलम्–वर्तुलम्, समुदायः
मतम्–सम्मतम्, अभिप्रायः
मतः–सम्मतः, मान्यः
मतिः–बुद्धिः
मतिमान्–बुद्धिमान्
मथितः–भग्नः

मथितम्—निर्जलं तक्रम्
मदीयम्—मम इदम्
मद्भावः—मम तादात्म्यम्
मद्रपः—शल्यः
मद्रेश्वरः—शल्यः
मधुसूदनः—मधुहन्ता, श्रीकृष्णः, विष्णुः
मध्यम्—मध्यभागः, कटिः
मनःषष्ठेन्द्रियाणि—ज्ञानेन्द्रियाणि पञ्च मनश्च
मनीषी—विद्वान्
मनुजः—मनुष्यः
मन्त्रः—गुप्तो विचारः
मन्त्रयस्व—विचारय
मन्दः—मूर्खः, अज्ञानी
मन्युः—क्रोधः, दैन्यम्
मम्लुः—श्रान्ता बभूवुः
मरुत्—देवः, पवनः ( वायुः )
मरुत्पतिः—इन्द्रः
मर्त्यः—मृत्युलोके उत्पन्नः
मर्त्यधर्मः—मृत्युः
मर्दनः—नाशकः, पीडादायकः
मर्षणम्—सहनम्
मलयध्वजः—पाण्ड्यः
महत्तरः—वृद्धः, श्रेष्ठः
महद्ब्रह्म—माया
महाकाली—कालरूपा
महातपाः—उग्रतपाः
महाबाहुः—अजानुबाहुः
महाभुजः—आजानुबाहुः, महाबाहुः
महामात्रः—श्रेष्ठः, मुख्यः
महामात्रः—हस्तिपकः
महारथः—

एकादश सहस्राणि
योधयेद्यस्तु धन्विनाम् ।
शस्त्रशास्त्रप्रवीणश्च
स वै प्रोक्तो महारथः ॥१॥
अमितान्योधयेद्यस्तु
संप्रोक्तोऽतिरथस्तु सः ।
रथस्त्वेकेन योद्धा स्या-
त्तन्न्यूनोऽर्धरथः स्मृतः॥२॥

महाव्रतः—दृढब्रह्मचर्यः
मही—पृथिवी
महीक्षित्—राजा
महीधरः—पर्वतः
महेन्द्रः—इन्द्रः
मा—निषेधार्थकमव्ययम्
माघमा—कर्कटी
मा चिरम्—सत्वरम्
मातरिश्वा—वायुः
मातलिः—इन्द्रस्य सारथिः
मातुलः—मातृभ्राता
मात्रा—इन्द्रियवृत्तिः
मादृशः—मम सदृशः
माद्रीपुत्रौ—नकुलसहदेवौ
माद्रेयः—माद्रीपुत्रः (सहदेवः + नकुलः)
माधवः—सात्यकिः, कृष्णः
माध्वीकम्—मधुकस्य मदिरा

मानसः—मनोभवः
मानुषतः—मानवात्
मानुषता—मनुष्यत्वम्
मान्यः—पूजनीयः
मा भैष्ट—भयं मा कुरुत
मामकः—मम सम्बन्धी
मारुतः—वायुः
मा शुचः—शोकं न कुरु
मार्गणः—बाणः
मांसहेतुः—मांसार्थी
मिथः—परस्परम्, एकान्ते
मिथ्या—असत्यम्
मिथ्याचारः—दाम्भिकः, कपटी
मिषन्—पश्यन्
मुखम्—मुख्यः, श्रेष्ठः
मुदितः—आनन्दितः
मुमुक्षुः—मोक्तुमिच्छुः, मोक्षेच्छुः
मुरजः—क्षुद्रमृदङ्गः
मुहुर्मुहुः—पुनः पुनः
मुहूर्तः—अल्पकालः, क्षणः
मूकत्वम्—मौनम्
मूर्च्छितम्—व्याप्तम्, वृद्धम्
मूर्तिः—शरीरम्, प्रतिमा
मूर्धजाः—केशाः
मूर्धा—मस्तकम्
मूर्धाभिषिक्तः—नृपः
मूलम्—करणम्
मृगः—हरिणः, पशुः
मृगयामहे—शोधयामः
मृगेन्द्रः—सिंहः
मृत्युसात्—मृत्युवशः
मृदितम्—नाशितम्, नष्टम्
मृधम्—समरः, युद्धम्
मृषा—असत्यम्, मिथ्या
मृष्यन्ते—सहन्ते, क्षमन्ते
मेदिनी—पृथ्वी
मेधा—तीक्ष्णा बुद्धिः
मेधावी—बुद्धिमान्
मेयः—मातुं योग्यः
मैत्रः—मित्रमेव मैत्रः
मोघः—निष्फलः, व्यर्थः
मोहनम्—मूर्च्छनम्
मोहितः—मूर्च्छितः
मौक्तिकाः—मुक्ताफलानि
मौलिः—मस्तकम्
म्लानः—खिन्नः, श्रान्तः
म्लायन्ति—शुष्यन्ति
यक्षः—देवयोनिविशेषः
यक्षराट्—कुबेरः
यज्ञः—ईश्वराराधनम्, विष्णुः
यत्तः—अप्रमत्तः, सज्जः, उद्युक्तः
यत्नपरः—प्रयत्नशीलः
यथाकामम्—यथेच्छम्
यथाविधि—शास्त्रोक्तम्
यथाश्रद्धम्—मनसोक्तम्
यदुनन्दनः—श्रीकृष्णः

यदृच्छया–अनायासेन
यन्ता–सारथिः
यमराष्ट्रम्–यमलोकः
यमौ–नकुलसहदेवौ
यष्टिः–लगुडः, वंशादिदण्डः
याज्ञसेनी–द्रौपदी
यातनन्–अन्तः, प्रतिकारः
यात्रा–चरितार्थः, गमनम्, निर्वाहः
यानम्–रथः, वाहनम्
यामः–प्रहरः
युक्तः–योग्यः
युक्तवान्–नियोजितवान्
युक्त्वा–नियुज्य
युगपत्–एकस्मिन् काले
युग्यम्–वाहनम्
युज्यताम्–क्रियताम्
युध्–युद्धम्
युयुत्सति–युद्धं कर्तुमिच्छति
युयुत्सुः–योद्धुमिच्छुः
युयुधानः–सात्यकिः
युयुधिरे–युद्धं कृतवन्तः
यूथम्–समूहः
यूपकेतुः–भूरिश्रवाः
योगः–अप्राप्तप्राप्तिः
योगः–चित्तवृत्तिनिरोधः
योगः–देशकालादिसम्पत्तिः
योगः–समुदायः
योगः–उपायः, युक्तिः
योगः–संनहनम्
योधः–योद्धा
योनिः–उत्पत्तिस्थानम्
योनिः–कारणम्, प्रवेशस्थानम्
योषा–स्त्री, ललना
योषित्–स्त्री, ललना
योषिता–स्त्री, ललना
यौधिष्ठरम्–युधिष्ठिरस्य सम्बन्धि
यौनः–योनिनिमित्तः
यौवनम्–तारुण्यम्
यौवनम्–यूनः भावः
रंहः–वेगः
रक्तम्–रुधिरम्, रक्तवर्णम्
रक्षः–राक्षसः
रजः–धूलिः, स्त्रीरजः
रक्षा–रक्षणम्
रजतम्–रूप्यम्, सुवर्णम्
रजस्वला–ऋतुमती
रणः(णम्)–युद्धम्, युद्धभूमिः
रणमूर्धनि–रणाग्रे
रतः–तत्परः
रतिः–मैथुनम्
रतिः–आनन्दः, प्रेम
रथेषुः–अदूरस्थायी बाणः
रथोपस्थः–रथमध्यः
रभसः–रणोत्सुकः
रश्मिः–किरणः, प्रग्रहः
रश्मिवान्–सूर्यः, सूतः
रसः–रुचिः, प्रेम, जलम्
रसना–रशना, मेखला

रसात्मकः—जलमयः
रागः—वर्णः, प्रेम, रक्तवर्णः
रागः—भक्तिः, प्रीतिः, रक्तिमा
राजगुह्यम्—गुह्यानां राजा
( अतिगुह्यम् )
राजविद्या—विद्यानां राजा
( अध्यात्मविद्या )
राधेयः—राधापुत्रः ( कर्णः )
रामः—बलरामः
रिक्तः—शून्यः
रिपुः—शत्रुः
रुक्मम्—सुवर्णम्
रुक्मरथः—द्रोणाचार्यः
रुक्मवाहनः—द्रोणाचार्यः
रुग्णः—पीडितः
रुग्णा—भग्ना
रुज् ( जा )—रोगः, दुःखम्
रुट्—क्रोधः
रुद्रः—शिवः
रुधिरम्—शोणितम्, रक्तम्
रुरुः—हरिणभेदः
रूषितः—व्याप्तः, रचितः
रूषितः—अलङ्कृतः
रोमहर्षः—रोमाञ्चः
रोरूयमाणा—रोदनशीला
रौद्रः—भयङ्करः
रौहिणेयः—रोहिणीपुत्रः, बलरामः
लक्षणम्—चिह्नम्
लक्ष्म—चिह्नम्
लक्ष्मणः—दुर्योधनपुत्रः, दशरथपुत्रः
लक्ष्मणमाता—दुर्योधनपत्नी
लघुवृत्तम्—शीघ्रकारि
लघुहस्तः—चित्रयोधी
ललाटम्—भालम्
लाघवम्—लघुत्वम्, नीचत्वम्
लाघवम्—कौशल्यम्
लाघवम्—शैघ्र्यम्
लाङ्गलम्—सीरः, हलम्
लालप्यमानः—दीनः, दुःखी
लालसः—अत्युत्सुकः
लालितः—पालितः
लिङ्गम्—चिह्नम, लक्षणम्
लिप्सुः—लब्धुमिच्छुः
लुप्तधर्मा—नष्टधर्मा
लुब्धः—लोभी
लुब्धकः—व्याधः
लूनः—त्रुटितः, छिन्नः
लोकः—भुवनम्, जनः
लोकनाथः—राजा
लोकसङ्ग्रहः—लोकस्य स्वधर्मे प्रवर्तनम्
लोप्ता—नाशकर्ता
लोमहर्षः—रोमाञ्चः
लोष्टम्—मृत्तिकाखण्डः
लोहितः—रक्तवर्णः
वंशः—समूहः, वेणुः
वक्त्रम्—मुखम्

वक्षः–उरः
वचः–भाषणम्, वाक्यम्
वज्रम्–इन्द्रस्य शस्त्रम्
वज्रपाणिः–इन्द्रः
वज्रायन्ते–वज्रीभवन्ति
वत्सदन्तः–बाणविशेषः
वदिता–वक्ता
वधः–वधोपायः
वधूः–स्नुषा
वध्यः–हन्तुं योग्यः
वध्यति–मरिष्यति
वपुः–शरीरम्
वप्रः–प्राकारभित्तिः
वयस्यः–मित्रम्
वरः–वरदानम्, श्रेष्ठः
वरायुधम्–धनुःश्रेष्ठम्
वरारोहा–सुन्दरी स्त्री
वरिष्ठः–श्रेष्ठः
वरूथः–वर्म, सैन्यम्, समूहः
वरूथिनी–सेना
वर्चस्–तेजः
वर्जितः–रहितः
वर्तन्–वर्तमानः
वर्त्म–मार्गः
वर्म–कवचम्, कञ्चुकम्
वर्षम्–वृष्टिः
वल्गु–मधुरम्
वशः–अधीनः
वसनम्–वस्त्रम्
वसु–द्रव्यम्
वसुन्धरा–पृथिवी
वसुमती–पृथ्वी
वाक्यम्–वचनम्, भाषणम्
वाग्यतः–मौनी, अभाषणशीलः
वाच्यः–निन्द्यः
वाच्यम्–वक्तव्यम्
वाजः–पक्षः (बाणस्य)
वाजी–अश्वः
वाञ्छितः–इच्छितः
वाट्यम्–यवान्नम्, क्रीतान्नम्
वातः–पवनः, वायुः
वातायमानः–इतस्ततो धावन्
वादित्रम्–वाद्यम्
वानम्–गमनम्
वायसः–काकः
वारणः–गजः, निवारकः
वारणम्–निवारणम्
वार्तिकः–वार्ताहरः
वासः–वस्त्रम्, वसतिः
वासः–निवासस्थानम्
वासवः–इन्द्रः
वासविः–वासवपुत्रः(अर्जुनः-जयन्तः)
वासवी–इन्द्रदत्ता शक्तिः
वासवी–वासवस्य इयम्
वासिता–करिणी, करेणुः
वासुदेवः–श्रीकृष्णः, वसुदेवपुत्रः

वाहः—अश्वः, रथः
वाहिनी—सेना
विंशतिः—व्यूहः, २०
विकर्तनः—सूर्यः
विकर्म—निषिद्धं कर्म
विकृतम्—बीभत्सम्, अदर्शनीयम्
विकृतम्—विकारयुक्तम्
विक्रान्तः—पराक्रान्तः
विक्षोभ्यमाणा—विदार्यमाणा
विगर्हितम्—निन्दितम्
विगाह्य—प्रविश्य
विगुणः—अङ्गहीनः
विग्रहः—युद्धम्, कलहः, शरीरम्
विघट्टितः—आहतः, ताडितः
विचारणा—संशयः
विचित्रवीर्यः—विचित्रवीर्यराजा
विचेतनः—निश्चेष्टः
विचेताः—मूर्च्छितः
विजयः—अर्जुनः, जयः
विज्ञानम्—अस्त्रशिक्षा
विज्ञानम्—अनुभवः, साक्षात्कारः
विज्ञाय—ज्ञात्वा
विज्वरः—सुखी
विततम्—विस्तृतम्, महत्
वितन्वन्—कुर्वन्
वितन्वानः—विरचयन्
वित्तम्—धनम्, द्रव्यम्
वित्तेशः—कुबेरः
वित्रस्तः—भयपीडितः
विदलीकृतः—दलितः, भग्नः
विदारितः—भेदितः
विदितम्—ज्ञातम्
विद्धि—जानीहि
विद्रवते—पलायते
विद्रुतम्—पलायितम्
विधमित्वा—नाशयित्वा
विधवा—मृतभर्तृका, गतभर्तृका
विधा—प्रकारः
विधिः—शास्त्रम्
विधित्सुः—कर्तुमिच्छुः
विधेयः—वशः, स्वाधीनः, आज्ञापालकः
विनयः—शिक्षणम्, नम्रता
विनिकारः—अपमानः, अपकारः
विनिकृतः—निर्वासितः
विनिकृतः—अपमानितः
विनिष्पिष्य—निष्पीड्य
विन्दते—लभते
विपद्यते—नश्यते
विपन्नः—नष्टः
विपर्यासः—व्यत्यासः, परिवर्तनम्
विपश्चित्—विद्वान्
विपाकः—परिणामः
विप्रकीर्यन्त—विकीर्णाः
विप्रियम्—अप्रियम्
विप्रोषितः—निर्वासितः
विप्रोषितः—दूरदेशं गतः

विप्लवः—नाशः, सङ्कटम्
विबुधः—देवः, विद्वान्
विभावसुः—सूर्यः, अग्निः
विभ्रष्टः—भग्नः
विमथितम्—पीडितम्
विमनाः—दुश्चित्तः
विमुखः—पराङ्मुखः
विमुह्यति—मोहं प्राप्नोति
वियत्—आकाशः
विरोधः—वैरम्, द्वेषः
विलप्य—विलापं कृत्वा
विवक्षता—वक्तुमिच्छता
विवक्षितम्—वक्तुमिष्टम्
विवरम्—छिद्रम्, बिलम्
विवर्णः—म्लानः, दुःखितः
विवर्मा—कवचरहितः
विवसना—विवस्त्रा, नग्ना
विवारयिषुः—निवारयितुमिच्छुः
विवासाः—विवस्त्रः, नग्नः
विविक्तः—शुद्धः, निर्जनः
विवृतः—उद्घाटितः
विशः(स्त्री)—प्रजाः
विशस्तः—मारितः
विशस्य—हत्वा
विशातनम्—नाशनम्
विशारदः—तज्ज्ञः
विशालम्—महत्
विशिखः—बाणः
विशिष्टः—श्रेष्ठः
विशीर्णः—नष्टः, भग्नः
विशुद्धः—अत्यन्तशुद्धः
विशेषः—भेदः, अन्तरम्
विशोकः—भीमसेनसारथिः
विशोकः—शोकरहितः
विश्रब्धः—विश्वस्तः, निर्भयः
विश्रब्धम्—निःशङ्कम्
विश्वम्—सर्वम्
विषक्तः—अन्यासक्तः
विषमम्—विरुद्धम्
विषमम्—सङ्कटम्
विषाणः—दन्तः
विषाणम्—शृङ्गम्
विषादः—दुःखम्
विष्टभ्य—व्याप्य, सर्वतो धृत्वा
विष्टभ्य—संस्तभ्य, आश्रित्य
विष्वक्—सर्वव्यापी
विष्वक्—समन्ततः
विसंज्ञः—निश्चेष्टः, मूर्च्छितः
विसृष्टम्—मुक्तम्
विस्पर्धी—प्रतिस्पर्धी
विस्फार्य—विस्तृतं कृत्वा
विस्मापनम्—आश्चर्यजनकम्
विस्मितः—चकितः
विहङ्गमः—पक्षी
विहाय—त्यक्त्वा
विहायः—नभः, आकाशम्

विह्वलः—व्याकुलः, दुःखितः
विह्वलात—व्याकुलं भवति
वीक्षितुम्—द्रष्टुम्
वीतः—गतः
वीरः—पराक्रमी, योद्धा
वीरावसादनम्—युद्धभूमिः
वीरुध्—लता
वीर्यम्—पराक्रमः
वृकः—ईहामृगः
वृकोदरः—भीमसेनः
वृजिनः—पापी
वृजिनम्—पातकम्
वृतः—वेष्टितः
वृत्तम्—चरितम्, वार्ता
वृत्तः—वर्तुलः
वृत्रः—वृत्रासुरः
वृत्रहा—इन्द्रः
वृद्धिः—उत्कर्षः
वृन्दम्—समूहः
वृषः—वृषभः, धर्मः, कर्णः
वृषाङ्कः—शिवः
वृष्णयः—यादवभेदाः
वृष्णिः—यादवः
वृष्णिवीरः—सात्यकिः, श्रीकृष्णः
वेगितः—वेगयुतः
वेतनम्—भृत्यस्य देयं धनम्
वेत्थ—जानासि
वेदितव्यम्—ज्ञातव्यम्
वेद—जानाति, जानामि
वेपथुः—कम्पः
वेपमानः—कम्पमानः
वेला—मर्यादा, समयः
वेश्म—गृहम्
वेष्टनम्—उष्णीषम्, कटिबन्धनम्
वै—निश्चितम्, प्रसिद्धम्, पादपूरणम्
वैकर्तनः—विकर्तनपुत्रः (कर्णः)
वैक्लव्यम्—भीतिः, निश्चेष्टता
वैचित्रवीर्यः—विचित्रवीर्यपुत्रः (धृतराष्ट्रः)
वैनतेयः—गरुडः, विनतापुत्रः
वैवस्वतः—सूर्यपुत्रः, ( कर्णः + यमः + शनिः )
वैशसम्—वधः, नाशः
वैशसम्—वैरम्
वैश्वानरः—अग्निः
व्यंसयामास—निवारयामास
व्यंसितम्—विफलीकृतम्
व्यकत्थयत्—भर्त्सितवान्, आत्मश्लाघां कृतवान्
व्यक्तम्—स्पष्टम्
व्यजनम्—तालवृन्तम्
व्यतिकरः—नाशः, व्यत्यासः
व्यतिकरः—मेलकः, समागमः
व्यतिषक्तः—संलग्नः
व्यतीता—निर्गता, नष्टा
व्यथा—दुःखम्, पीडा

व्यथितः—दुःखितः
व्यधमत्—अनाशयत्
व्यपकृतम्—निन्द्यमाचरितम्
व्यपनामितम्—परिवर्तितम्
व्यपयास्ये—निर्गमिष्यामि, पलायनं करिष्यामि
व्यभिचारः—अनेकनिष्ठता
व्यर्थम्—निष्फलम्
व्यवसायः—निश्चयः, कृतिः
व्यशीर्यत—नष्टः, विशीर्णः
व्यष्टम्भयत्—निरोधयामास
व्यसनम्—नाशः, सङ्कटम्
व्यसुः—निर्गतप्राणः, मृतः
व्यहरत्—समचरत्
व्याघ्रः—श्रेष्ठः
व्यात्तम्—विस्तारितम्
व्यामिश्रम्—मिश्रितम्, सन्दिग्धम्
व्यामोहयत—अमूर्च्छयत्
व्यालः—दुष्टगजः, सर्पः
व्यालः—दुष्टः, व्याघ्रः
व्यावृत्य—विस्फार्य
व्याहृतम्—भाषितम्
व्युत्क्रम्य—अतिक्रम्य
व्युपरम्य—विरम्य
व्युषिता—प्रभाता
व्युष्टा—प्रभाता
व्यूढः—व्यूहरचनया स्थितः
व्यूह—रचय

व्यूहः—सेनारचना
व्यूह्य—व्यूहं कृत्वा
व्येति—नश्यति, अपगच्छति
व्येतु—अपगच्छतु, नश्यतु
व्योम—आकाशः
व्रजः—समूहः
व्रातः—समूहः
व्रीडा—लज्जा
शंस—कथय
शकलम्—खण्डः
शक्रः—इन्द्रः
शतम्—१००
शतंशता—दशसहस्राणि (१००००)
शतक्रतुः—इन्द्रः
शतसहस्रम्—१०००००
शतानीकः—नकुलपुत्रः
शपे—शपथं करोमि
शबलः—चित्रः, कर्बुरः
शमः—शान्तिः, मनोजयः
शमयेत्—नाशयेत्
शम्बरहा—मदनः
शरः—बाणः, दर्भः
शरणम्—रक्षणकर्ता, गृहम्
शरतल्पम्—शरशय्या
शरद्—वर्षम्, ऋतुः
शरभः—सिंहशत्रुः, पशुविशेषः
शरावरम्—कवचम्
शरासनम्—धनुः

शरीरम्–देहः
शरीरी–प्राणी, देहधारी
शर्म–कल्याणम्
शर्वः–शिवः
शर्वरी–रात्रिः
शलभः–पतङ्गः
शल्यः ( म् )–बाणाग्रम्
शशकः–मृगविशेषः
शशाङ्कः–चन्द्रः
शशी–चन्द्रः
शश्वत्–चिरकालम्
शाखामृगः–वानरः
शात्रवः–अरिः, शत्रुः
शाधि–शिक्षय, उपदेशं कुरु
शान्तनवः–शन्तनुपुत्रः ( भीष्मः )
शान्तनुः–शन्तनुराजा
शारद्वतः–कृपाचार्यः
शारीरम्–शरीरस्थितिमात्रप्रयोजनम्
शार्दूलः–श्रेष्ठः, व्याघ्रः
शालकटङ्कटः–अलम्बुषः राक्षसः
शाला–गृहम्
शालावृकः–जम्बूकः, कुक्कुरः
शाश्वतः–शश्वद्भवः, नित्यः
शासनम्–आज्ञा, दण्डः
शिखरम्–पर्वतस्य अग्रभागः, सानुः
शिखरी–पर्वतः
शिखा–ज्वाला
शितः–तीक्ष्णः
शिथिलः–प्रस्खलितप्रयत्नः
शिबिरम्–सेनानिवासः
शिरः–मस्तकम्
शिरोधः–कन्धरा, ग्रीवा
शिरोरुहाः–केशाः
शिला–पाषाणः, शाणः
शिलाशितः–अत्यन्ततीक्ष्णः
शिलीमुखः–बाणः
शिवम्–भद्रम्
शिशिरः–शीतकालः
शिष्टः–शेषः, संमतः
शीघ्रम्–सत्वरम्
शीघ्रगः–शीघ्रगामी
शीर्णः–भग्नः
शुच्–शोकः
शुचिः–शुद्धः, पवित्रः
शूलभृत्–शिवः
शृङ्गम्–विषाणम्
शेकुः–शक्ताः
शेषः–अवशिष्टो भागः
शैनेयः–सात्यकिः, शिनिपुत्रः
शैलः–गिरिः, पर्वतः
शोकः–इष्टस्य पुनः पुनः मनसि निवेशनम्
शोकः–दुःखम्
शोणाश्वः–द्रोणाचार्यः
शोणितम्–रक्तम्
शौचम्–शुचिता, निर्मलत्वम्

शौटीरः—शूरः, गर्वयुक्तः
शौटीर्यमानी—आत्मानं शूरं मन्यमानः
शौण्डः—कुशलः
शौर्यम्—मानसबलम्
शौर्यम्—शूरस्य भावः
श्मश्रु—पुम्मुखे केशाः
श्यामा—सुन्दरस्त्री, तरुणी स्त्री
श्यावः—अपत्यम्
श्येनः—पक्षिविशेषः
श्रद्धा—विश्वासः
श्रद्धामयः—श्रद्धाप्रधानः
श्रद्धेयम्—विश्वासयोग्यम्
श्रीः—लक्ष्मीः
श्रुतः—विदितः
श्रुतम्—ज्ञानम्, विद्या
श्रुतम्—शास्त्रम्
श्रुतकर्मा—अर्जुनपुत्रः
श्रुतसेनः—सहदेवपुत्रः
श्रुतिः—वेदः, शास्त्रम्
श्रेयः—कल्याणम्, मोक्षः
श्रेयान्—प्रशस्ततरः
श्रोतव्यम्—श्रोतुं योग्यम्
श्रोत्रम्—कर्णः ( इन्द्रियम् )
श्वः—आगामि दिनम्
श्वपाकः—चाण्डालः
श्वापदः—हिंस्रपशुः
श्वेतवाहनः—अर्जुनः
श्वेता—महेश्वररूपा

षट्—६
षट्त्रिंशः—३६
षड्भागः—षष्ठांशः
षड्भागहर्ता—नृपः
षट्साहस्रः—६०००
षष्टिः—६०
षष्टिषट्—६६
षष्टिहायनः—षष्टिवर्षदेशीयो गजः
षोडश—१६
संयच्छ—नियमय
संयत्—युद्धम्
संयन्तुम्—नियमनं कर्तुम्
संयमनी—यमनगरी, प्रेतपुरम्
संयुगम्—युद्धम्
संरम्भः—क्रोधः
संरम्भी—क्रोधी
संवर्तयति—स्ववशं नयति
संविग्नः—पीडितः
संविद्—सङ्केतः, संभाषणम्
संविधानम्—योजना, उपायः
संविधानम्—प्रतिविधानम्
संवीतः—युक्तः, सहितः
संवृता—व्याप्ता
संशयः—सङ्कटम्
संशितम्—तीक्ष्णम्
संश्रयः—आश्रयः
संसक्तः—संलग्नः
संसद्—सभा

संस्तभ्य—स्तम्भयित्वा
संहननम्—शरीरम्
संहतः—एकत्रितः
संहर—नाशय
सक्तः—आसक्तियुक्तः
सक्थि—ऊरु
सखा—वयस्यः, मित्रम्
सखी—वयस्या
सङ्कल्पः - निश्चयः, उद्देशः
सङ्करः—मिश्रणम्
सङ्काशः—सदृशः
सङ्कुलम्—युद्धम्
सङ्क्षयः—नाशः
सङ्क्षयते—क्षिणोति
सङ्ख्यम्—युद्धम्
सङ्गः—आसक्तिः
सङ्गरः—युद्धम्
सङ्घः—समुदायः
सङ्घातः—समूहः
सञ्चयः—सङ्ग्रहः
संज्ञा—चेतना, सङ्केतः
संज्ञा—चिह्नम्
सञ्जयति—आश्लेषयति
सत्कृता—पूजिता
सत्क्रिया—पूजा
सत्तमः—श्रेष्ठः
सत्यवती—शान्तनुपत्नी, व्यासमाता
सत्यवतीपुत्रः—व्यासः
सत्यसन्धः—सत्यप्रतिज्ञः
सत्त्वः—प्राणी
सत्त्वम्—चित्तम्
सत्त्वम्—लिङ्गशरीरम्
सत्त्वम्—धैर्यम्
सत्त्वम्—बलम्
सदनम्—गृहम्
सदा—सततम्, अविरतम्
सदागतिः—वायुः
सदृशम्—तुल्यम्, अनुरूपम्
सद्भावः—अस्तित्वम्
सनातनः—चिरन्तनः
सन्तप्तः—दुःखितः
सन्तस्तार—आच्छादितवान्
सन्तानम्—सन्ततिः
सन्धा—प्रतिज्ञा
सन्धाय—संयोज्य, सन्धि कृत्वा
सन्धिः—सन्धानम्
सन्नतिः—नमनम्
सन्नद्धः—सज्जः
सन्निकर्षः—सन्निधिः
सन्निपातः—मोहः, युद्धम्, क्षयः
सन्निभः—सदृशः
संन्यसनम्—त्यागः, संन्यासः
सपत्नः—शत्रुः
सप्त—७
सप्ततिः—७०
सप्तशतम्—७००

समः—तुल्यः
समम्—सह
समग्रम्—सम्पूर्णम्
समचूचुदत्—प्रेरयामास
समपद्यत—अभूत्
समपोथयत्—अनाशयत्, आस्फालयत्
समयः—पणः
समयः—सङ्केतः
समवेतः—मिलितः
समाः—वर्षाणि
समाख्याय—कथयित्वा
समाद्रवन्—अन्योन्यं समगच्छन्
समाधातुम्—सान्त्वयितुम्
समाधातुम्—स्थापयितुम्
समाप्तः—सम्पूर्णः, परिपूर्णः
समाप्तविद्यः—सम्यगाप्तविद्यः, पण्डितः
समारम्भः—कर्म
समार्च्छत्—समीपं गतः
समाश्लिष्य—आलिङ्ग्य
समासः—सङ्क्षेपः
समासदत्—प्राप्तः, समीपं गतः
समासाद्य—प्राप्य
समास्थाय—कृत्वा
समित्—युद्धम्
समितिः—सभा, युद्धम्
समिद्धः—सम्यग्ज्वलितः
समीक्ष्य—दृष्ट्वा, विचार्य
समीरितः—वर्धितः
समुच्छेदः—नाशः
समुन्नद्धः—गर्वयुक्तः
समुन्नद्धम्—वृद्धिं गतम्
समुपस्थितः—प्राप्तः
समुपेयिवान्—प्राप्तवान्
सम्पातः—प्रहारः, पतनम्
सम्पूज्य—मानयित्वा
सम्प्रधार्य—निश्चित्य, मन्त्रयित्वा
सम्प्रहारः—युद्धम्
सम्प्रजह्रे—युद्धं चक्रे
सम्भवः—उत्पत्तिः
सम्भावितः—सम्मानितः, पूज्यः
सम्भ्रमः—चिन्ता
सम्भ्रमः—उद्वेगः, त्वरा, आदरः
सम्मथ्यमानः—आलोड्यमानः
सम्मर्दः—युद्धम्, नाशः
सम्मितः—तुल्यः, युक्तः
सम्मोहः—मूर्छा
सम्मोहः—विवेकाभावः
सरः—सरोवरम्, जलाशयः
सर्गः—सृष्टिः, उत्पत्तिः
सर्वथा—सर्वप्रकारेण
सर्वात्मानम्—सर्वः आत्मानम्
सलिलम्—जलम्
सव्यः—दक्षिणः, वामः
सव्यसाची—अर्जुनः
सस्यम्—धान्यम्
सहजम्—जन्मतः प्राप्तम्

सहसा–युगपत्
सहसैव–युगपदेव
सहस्रम्–१०००
सहस्राक्षः–इन्द्रः
सहैव–युगपत्
सांयमनिः–शलः
सांसिद्धिकः–स्वभावसिद्धः
सागरः–समुद्रः
साङ्ग्रामिकः–सङ्ग्रामे भवः
सात्वतः–यादवः
सात्वतीपुत्रः–अभिमन्युः
सादनम्–गृहम्
सादी–अश्वारोहः, अश्ववारः
साधय–गच्छ
साधयते–प्राप्नोति
साधु–शोभनम्, समीचीनम्
साधुभावः–समीचीनत्वम्
सान्तरः–असम्पूर्णः, सच्छिद्रः
साफल्यम्–सफलत्वम्
साम–सौम्यता, प्रियवचः
सामासिकः–समाससमुदायः
सायकः–शरः, बाणः
सारः–दृढः
सारमेयः–कुक्कुरः
सार्थः–समुदायः
सार्धम्–सह, अर्धयुक्तम्
साह्यम्–साहाय्यम्
सिद्धः–योगी
सिद्धिः–चित्तशुद्धिः, मोक्षः इ.
सिन्धुः–नदी
सीदन्ति–निश्चेष्टानि भवन्ति
सीमन्तिनी–स्त्री, नारी
सीरः–हलम्
सीरभृत्–बलरामः
सुकृतम्–शोभनकृत्यम्, पुण्यम्
सुखेन–अनायासेन
सुजातम्–शोभनं जन्म
सुतः–पुत्रः
सुतसोमः–वृकोदरपुत्रः
सुता–कन्या
सुतेजनः–तीक्ष्णः
सुधर्मा–कौरवपुरोहितः
सुपर्णः–गरुडः
सुरः–देवः
सुसंयत्तः–सुसज्जः
सुहृद्–आत्मीयः, हितकारकः, मित्रम्
सूतः–सारथिः
सूतपुत्रः–कर्णः
सूतनन्दनः–कर्णः
सूदितः–मारितः
सृक्किणी–ओष्ठप्रान्तौ
सृजन्–मुञ्चन्, उत्पादयन्
सृजसि–ददासि
सृञ्जयाः–पाञ्चालभेदाः
सृतिः–मार्गः
सृतिः–गतिः

सृष्टः–रचितः
सेगवा–कर्कः, कर्कपुत्रः
सेतुः–बन्धः, मर्यादा
सेना–समुदायः, सैन्यम्
सेनानीः–सेनापतिः
सेनाप्रणेता–सेनापतिः
सैन्धवः–अश्वः
सैन्धवः–जयद्रथः
सैन्यस्य चतुरङ्गानि–गजः, अश्वः, रथः, पदातिः
सोदरः–बन्धुः, सहोदरः
सोदर्यः–भ्राता, सहोदरः
सोपधम्–कपटेन सहितम्
सोमः–चन्द्रः
सोमकाः–पाञ्चालाः
सौतिः–सूतपुत्रः, कर्णः
सौबलः–शकुनिः
सौबलेयी–गान्धारी
सौभद्रः–सुभद्रापुत्रः, अभिमन्युः
सौभ्रात्रम्–बन्धुप्रीतिः
सौमदत्तिः–भूरिश्रवाः
सौष्ठवम्–सौन्दर्यम्
सौष्ठवम्–कौशलम्
सौहृदम्–स्नेहः
स्कन्दः–षडाननः, शिवपुत्रः
स्तनः उरोजः, कुचः
स्तन्यम्–दुग्धम्, स्तने भवम्
स्तब्धः–अनम्रः, उद्धतः, निश्चलः
स्तवः–स्तुतिः, स्तोत्रम्
स्थण्डिलम्–भूमिः
स्थण्डिलम्–वेदिः
स्थविरः–वृद्धः
स्थाणुः–शिवः
स्थाता–स्थास्यसि
स्थानम्–कारणम्, वसतिस्थानम्
स्थाने–युक्तम्
स्थिरः–अचलः
स्थूणा–स्तम्भः
स्थैर्यम्–स्थिरता
स्निग्धम्–मधुरम्, प्रीतियुक्तम्
स्निह्यते–प्रीणाति
स्नुषा–वधूः, पुत्रपत्नी
स्नेहः–तैलघृतादि
स्नेहः–प्रेम, प्रणयः
स्नेहपाचितः–स्नेहसंयुक्तः
स्पर्शः–सम्बन्धः
स्फिक्–नितम्बः
स्फिचौ–कटिप्रोथौ
स्फीतम्–समृद्धम्
स्फुलिङ्गः–अग्निकणः
स्मयन्–हसन्
स्यन्दनः–रथः
स्रंसते–च्यवते
स्त्रीत्वम्–स्त्रीभावः, स्त्रैणम्
स्वः–स्वर्गः, परलोकः
स्वम्–आत्मीयम्

स्वका—स्वीया, आत्मीया
स्वप्ता—स्वप्स्यामि
स्वप्नः—निद्रा
स्वयनम्—सुगतिदम्
स्वसा—भगिनी
स्वस्तिः(स्ति)—कल्याणम्, आशीर्वादः
स्वाध्यायः—वेदाध्ययनम्
स्विका—आत्मीया
स्विन्नः—स्वेदयुक्तः
ह—पादपूरणे
हतः—मृतः, मारितः
हतम्—नष्टम्
हयः—अश्वः
हयज्ञः—अश्वहृदयज्ञः
हरिः—सिंहः, इन्द्रः, कपिः
हरिः—विष्णुः, अश्वः
हर्षः—आनन्दः, उत्साहः, उत्तेजनम्
हलम्—बलरामस्य आयुधम्
हलम्—भूमेरुत्खननसाधनम्
हलायुधः—बलरामः
हविः—घृतादि होमद्रव्यम्
हव्यम्—हवनीयं द्रव्यम्
हव्यवाट्—अग्निः
हस्तः—शुण्डादण्डः, पाणिः
हस्तावापः—अङ्गुलित्राणम्

हस्तिषड्गवम्—हस्तिषट्कम्
हस्ती—गजः
हायनः—संवत्सरः
हार्दिक्यः—कृतवर्मा
हिंसन्ति—नाशयन्ति
हिंस्रः—क्रूरः, घातुकः
हि—पादपूरणम्, कारणम्
हितम्—कल्याणम्
हितम्—हितप्रदम्
हितकृत्—प्रियकारी, सुहृद्, मित्रम्
हितैषी—हितेच्छुः
हिमवान्—हिमालयः
हिरण्यम्—सुवर्णम्
हिरण्याक्षी—पीतनेत्रा
हीनः—रहितः, शून्यः
हुतम्—अग्नौ प्रक्षिप्तं द्रव्यम्
हुताशनः—अग्निः
हृषितः—आनन्दितः
हृषीकम्—इन्द्रियम्
हेम—सुवर्णम्
हैडिम्बिः—हिडिम्बापुत्रः ( घटोत्कचः)
हैमवतः—हिमालयोत्पन्नः
ह्रदः—अगाधजलाशयः
ह्रादिनी—नदी
ह्री—लज्जा

---

# महाभारतसारस्य शुद्धिपत्रम्

| पृष्ठम् | श्लोकः | शुद्धम् |
|---|---|---|
| १२ | १३५ | धार्तराष्ट्रै |
| ४३ | ५ | मे |
| ५० | १६ | ग्रसिष्णु प्रभ |
| ७० | १३८ | समुदीर्यन्तं |
| ७२ | १५७ | त्वं |
| १०१ | १२ | सैन्य |
| १३९ | ७३ | जीवग्राहं |
| १४३ | १२२ | त्रस्ता |
| १४७ | १७९ | महाद्रुमाः |
| १५० | २२२ | मृदूना |
| १५३ | २५४ | श्चैव |
| १५४ | २६५ | तदद्भुत |
| १७१ | ४८० | हिंनस्ति |
| १९१ | ७२३ | सङ्क्रुद्धाः |
| १९७ | ८१० | कैकेयं |
| २२४ | ५१ | शङ्खैश्च |
| २४२ | १३७० | शिनेः |
| २४३ | १३८० | भीम |
| २४४ | ९९ | मूढा |
| २४९ | ५९ | शिष्टोऽसि |
| २५५ | ४४ | तवैत |
| २८७ | २८ | खड्गी |
| २९७ | ५३ | महारथैः |
| २९९ | ७९ | विप्रद्रुते बले |

| पृष्ठम् | श्लोकः | शुद्धम् |
|---|---|---|
| ३१० | २०४ | यदि मे |
| ,, | ,, | कामो मे |
| ३१२ | २३५ | आक्रम्य |
| ३१६ | २७८ | दृष्ट्वा |
| ३१७ | २९७ | षड्गवम् |
| ,, | २९९ | दृथैव |
| ३३४ | ५१२ | दुर्मन्त्रिते |
| ,, | ,, | विनाशं |
| ३४४ | ६०९ | न वा |
| ३४७ | ६४४ | तदाऽऽसी |
| ३४८ | ६५४ | ये न्यायेन |
| ३६९ | ८४३ | प्रवृद्धशृङ्गद्रुम |
| ३८२ | ९६२ | सुमहांल्लोम |
| ३८६ | ३७ | समायुक्तः |
| ३९२ | ११५ | वधैषिणः |
| ४१४ | ३७३ | न ह्येको |
| ४१६ | ३९७ | प्रतिज्ञां |
| ४२० | ४५७ | तवानघ |
| ४४० | ८५ | दर्वी |
| ४५३ | २४२ | महर्षी |

## महाभारतसारशब्दार्थसङ्ग्रहशुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | शुद्धम् |
|---|---|---|
| ४७९ | ९ | अङ्गिराः |
| ४८१ | ३ | अनुयायी |
| ,, | २७ | अन्तरधीयत |
| ४८२ | १७ | अनर्थकम् |
| ,, | २४ | अभिक्रमः |
| ४८४ | ११ | वक्तुमयोग्यः |
| ,, | २३ | अशरीरिणी |

| पृष्ठम् | पङ्क्तिः | शुद्धम् |
|---|---|---|
| ४८४ | २७ | अशेषेण |
| ,, | २८ | अशीतिपञ्चकः |
| ४८५ | १४ | आजिः |
| ४९३ | २५ | संन्यासाः |
| ५०२ | २८ | पीनः |
| ५०४ | १२ | प्रतिध्वनिः |
| ५०५ | ५ | बहुधा |
| ,, | १६ | सेवकः |
| ,, | १९ | प्लवङ्गमः |
| ५०८ | १५ | मही |
| ५०९ | २८ | मृगः |
| ५१० | १९ | योद्धुमिच्छुः |
| ५११ | ३ | प्रीतिः |

---

## ( मराठी ) महाराष्ट्रभाषासारांशशुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | शुद्धम् |
|---|---|---|
| २ | १८ | त्यांपैकीं |
| ३ | १३ | कलिंग |
| ९ | १२ | कीं |
| ,, | १३ | नाहीं |
| ,, | १४ | देवांनीं |
| ,, | ,, | केली |
| ,, | २२ | होईल |
| ,, | ,, | त्यामुळें |
| ,, | २६ | मंडळीं |
| ,, | ,, | आलेलीं |

| पृष्ठम् | पङ्क्तिः | शुद्धम् |
|---|---|---|
| १० | ६ | मंडळीं |
| ११ | २५ | समोर |
| १२ | ४ | कीं |
| १३ | १ | द्रोणाचार्यांनीं |
| ,, | २ | आनंद |
| १४ | १४ | द्रोणाचार्य |
| १५ | २८ | तेव्हां |
| १६ | १२ | भूरिश्रवा |
| १९ | १४ | सात्यकी |
| २१ | १ | तरवार |
| ,, | १० | त्यांनीं |
| २२ | २० | सर्वांनीं |
| ३५ | १४ | नाहींत |
| ३९ | ९ | भीमसेन |
| ,, | ११ | दुर्योधनाचा |
| ४६ | १४ | लोखंडाची |
| ४८ | १० | तीं |
| ,, | ११ | मंडळीं |
| ,, | ,, | आलीं |

---

## हिन्दीसारांशशुद्धिपत्रम् ( खंड २ )

| पृष्ठम् | पङ्क्तिः | शुद्धम् |
|---|---|---|
| ४९ | १२ | शस्त्रास्त्रोंसे |
| ५१ | १२ | किसीको |
| ,, | २१ | करना |
| ५८ | ३ | हँसे |
| ,, | ६ | जहाँ |
| ,, | २० | भीष्मपितामहने |
| ,, | २४ | मैंने |

| पृष्ठम् | पङ्क्तिः | शुद्धम् |
| --- | --- | --- |
| ५८ | २ | अर्जुनने |
| ,, | ८ | जानेकी |
| ,, | ९ | करेंगे |
| ,, | १२ | मैं |
| ६६* | ४ | द्रोणाचार्यने |
| ६७ | २३ | जयद्रथके रक्षणार्थ |
| ६९ | १६ | पूर्तिमें |
| ,, | ,, | मैंने |
| ,, | २५ | फेंका |
| ७० | ४ | कर्णपर |
| ७२ | ३ | अर्जुनपर |
| ,, | १९ | हाथको |
| ७३ | ९ | किया |
| ८० | ९ | धनुष्य |
| ,, | १३ | कैसे |
| ,, | २० | बन्धुको |
| ८२ | १३ | कहाँ |
| ८५ | १३ | धर्मराजापर |
| ,, | ,, | धर्मराजाने |
| ९१ | ९ | पाण्डव-सैन्यका |
| ९२ | १० | द्रौपदी |
| ,, | १३ | बैठी |
| ,, | २३ | तब |
| ९३ | १४ | होकर |
| ,, | २४ | तभी |
| ९५ | १२ | मिलनेकी |
| ,, | २५ | मैं |

*भीष्मपर्वमें जहाँ जहाँ भीष्माचार्य लिखा है वहाँ वहाँ भीष्मपितामह पढ़िये।

( ७४ द्रोणपर्वका हिन्दी सारांश समाप्त )